मृत्युञ्जयः समभवत् प्रथितः स तेषा-
माचार्यवर्यचरणः सकलागमज्ञः ।
यः पञ्चतामुपगतं नरपालसूनुं
मृत्युं विजित्य सहसा पुनरानिनाय ॥४॥
वात्स्या हरार्धतनुभागपदाब्जसेवाः
स्थातास्तदीयकुलवृद्धिकरा बभूवुः ।
भोजान्वयक्षितिभृतां गुरवः पवित्रा
मन्त्रैकसाधनपरा भुवि याजजूकाः ॥५॥
भोजेषु तेष्वविनयादिव राजपीठाद्
भ्रष्टेपु केशरिकुलं तदलञ्चकार ।
तैरर्च्चिता द्विजवरा गुरवस्तथैव
जाता जगत्प्रथितवत्ससगोत्रिणस्ते ॥६॥
उद्योतकेशरिकुलस्य गुरुर्बभूव
तेषु प्रसिद्धमहिमा भवदेवनामा ।
सोमेश्वरो नृपकुलस्य समर्च्चनीयो
वंशः स तेन कृतिनैव कृतप्रतिष्ठः ॥७॥
येनोद्धृते सकलविस्तृतयन्त्रसारे
तन्त्रार्णवे महति मज्जति सर्वलोकः ।
यत्स्थापितामरकुलैरिह कृत्तिवासः-
क्षेत्रं बभूव बत यद् विपुलावकाशम् ॥८॥
भूपेषु केशरिकुलप्रभवेषु तेपु
विप्रापकारदहनैः प्रलयं गतेषु ।
देवद्विजातिपदपङ्कजचञ्चरीका
भूपा बभूवुरथ केचन गङ्गवंश्याः ॥९॥

× × × ×

# अनुबन्धिका*

[ निबन्धकः—श्रीकालीपदतर्काचार्यः ]

विदाङ्कुर्वन्तु श्रीमन्तो विबुधधौरेयाः! यदिदं प्रशान्तरत्नाकरं नाम नवीनं रूपकं वाल्मीकेः कविकुलगुरोः पूर्वरूपस्य रत्नाकरस्य दस्युवृत्ति-मास्थितस्य सुकठोरकलुषवृत्तिप्रशान्तिमधिकृत्य सन्निबद्धमास्ते। सोऽयं रत्नाकरो नाम रामायणमहावस्तुप्रजापतेः श्रीवाल्मीकिमहर्षेः पूर्वरूपमिति सुप्रथितमेव कथिकापारम्पर्येणा गोपालादानरपालम्। तदिदं रत्नाकर इति वाल्मीकेः पूर्वं नामधेयं कृत्तिवासकृतवङ्गभाषामयपद्यात्मकरामायणग्रन्थ एव सुस्पष्टमुल्लिखितमुपलभ्यते। अध्यात्मरामायणग्रन्थे महर्षिवाल्मीकिना स्वमुखेनैव श्रीरामसमीपे यदात्मवृत्तमुपवर्णितमयोध्याकाण्डे षष्ठसर्गे तत्र रत्नाकर इति नाम्नो गन्धोऽपि नासाद्यते। तत्रत्यो वृत्तभागस्तु कृत्तिवासादि-परिगृहीतेन सर्वत्र साम्प्रतिकेषु प्रथितेन वृत्तभागेन प्रायेण तुल्य एव †। मम सुयोग्यच्छात्रेण वेथुनकलेजाख्यराजकीयमहाविद्यालयस्य संस्कृताध्यापकेन श्रीमता चिन्ताहरणचक्रवर्तिकाव्यतीर्थ-एम्-ए-महोदयेन निबद्धं 'बाङ्गला रामायणे रत्नाकरेर उपाख्यान ओ ताहार मूल' इत्याख्यवङ्गभाषामयनिबन्धं

---

* पत्रिकायामस्यां प्रकाशं नीतस्य निबन्धककृतस्य "प्रशान्तरत्नाकर" नाटकस्यायं मुखबन्धः।

† राम त्वन्नाममहिमा वर्ण्यते केन वा कथम्।
यत्प्रभावादहं राम ब्रह्मर्षित्वमवाप्तवान्॥
अहं पुरा किरातेषु किरातैः सह वर्द्धितः।
जन्ममात्रद्विजत्वं मे शूद्राचाररतः सदा॥
शूद्रायां बहवः पुत्रा उत्पन्ना मेऽजितात्मनः।
ततश्चोरैश्च संगम्य चोरोऽहमभवं पुरा॥

तथा स्कन्दपुराणादिकमालोच्य विज्ञायते, यथा न केवलमध्यात्मरामायण एव, परमन्यत्रापि तद्वृत्तमस्ति निबद्धम्! तस्मादेव वङ्गभाषामयनिबन्धाद् विशेषतो विज्ञायते यथा वङ्गेभ्यो बहिरपि साधारणेषु प्रसिद्धं क्वचित् क्वचिदीदृशमेव वाल्मीकेः पूर्ववृत्तं लब्धप्रचारमास्ते। कर्णालिमण्डले लब्धप्रचारमीदृशमेकं वृत्तं १८९५ खृष्टाब्दे Indian Antiquary इत्याख्य-

---

धनुर्बाणधरो नित्यं जीवानामन्तकोपमः ।
एकदा मुनयः सप्त दृष्टा महति कानने ॥
साक्षान्मया प्रकाशन्तो ज्वलनार्कसमप्रभाः ।
तानन्वधावं लोभेन तेषां सर्वपरिच्छदान् ॥
ग्रहीतुकामस्तत्राहं तिष्ठ तिष्ठेति चाब्रवम् ।
दृष्ट्वा मां मुनयोऽपृच्छन् किमायासि द्विजाधम ॥
अहं तानब्रवं किञ्चिदादातुं मुनिसत्तमाः ।
पुत्रदारादयः सन्ति बहवो मे बुभुक्षिताः ॥
तेषां संरक्षणार्थाय चरामि गिरिकानने ।
ततो मामूचुरव्यग्राः पृच्छ गत्वा कुटुम्बकम् ॥
यो यो मया प्रतिदिनं क्रियते पापसञ्चयः ।
यूयं तद्भागिनः किं वा नेति वेति पृथक् पृथक् ॥
वयं स्थास्यामहे यावदागमिष्यसि निश्चयः ।
तथेत्युक्त्वा गृहं गत्वा मुनिभिर्यदुदीरितम् ॥
अपृच्छं पुत्रदारादींस्तैरुक्तोऽहं रघूत्तम ।
पापं तवैव तत् सर्वं वयन्तु फलभागिनः ॥
तच्छ्रुत्वा जातनिर्वेदो विचार्य पुनरागमम् ।
मुनयो यत्र तिष्ठन्ति करुणापूर्णमानसाः ॥
मुनीनां दर्शनादेव शुद्धान्तःकरणोऽभवम् ।
धनुरादीन् परित्यज्य दण्डवत् पतितोऽस्म्यहम् ॥

पत्रे प्रकाशितमभूत्। तत्रापि रत्नाकर इति नाम नास्ति। तत्र पुनरेष विशेषः, यद् वाल्मीकेः पूर्वरूपेण किरातेन रामनाम समुच्चारयितुमशक्यमिति मुनयस्तं 'म्र' इति शब्दजपमुपदिष्टवन्तः। अथ बहुवर्षानन्तरं यदा मुनयस्तेन मार्गेण व्रजन्तो वल्मीककूटमुपेत्य विश्रामार्थमाश्रितवन्तस्तदा तदभ्यन्तरात् समुद्गतं निरन्तरं शब्दमाकर्ण्य वल्मीककूटं भित्त्वा तस्मात्

---

रक्षध्वं मां मुनिश्रेष्ठा गच्छन्तं निरयार्णवम्।
इत्यग्रे पतितं दृष्ट्वा मामूचुर्मुनिसत्तमाः॥
उत्तिष्ठोत्तिष्ठ भद्रन्ते सफलः सत्समागमः।
उपदेक्ष्यामहे तुभ्यं किञ्चित्तेनैव मोक्ष्यसे॥
परस्परं समालोच्य दुर्वृत्तोऽयं द्विजाधमः।
उपेक्ष्य एव सद्वृत्तैस्तथापि शरणं गतः॥
रक्षणीयः प्रयत्नेन मोक्षमार्गोपदेशतः।
इत्युक्त्वा राम ते नाम व्यत्यस्ताक्षरपूर्वकम्॥
एकाग्रमनसात्रैव मरेति जप सर्वदा।
आगच्छामः पुनर्यावदुक्तं तत्त्वं सदा जप॥
इत्युक्त्वा प्रययुः सर्वे मुनयो दिव्यदर्शनाः।
अहं यथोपदिष्टं तैस्तथाकरवमञ्जसा॥
जपन्नेकाग्रमनसा बाह्यं विस्मृतवानहम्।
एवं बहुतिथे काले गते निश्चलरूपिणः॥
सर्वसङ्गविहीनस्य वल्मीकोऽभून्ममोपरि।
ततो युगसहस्रान्त ऋषयः पुनरागमन्॥
मामूचुर्निष्क्रमस्वेति तच्छ्रुत्वा तूर्णमुत्थितः।
वल्मीकान्निर्गतश्चाहं नीहारादिव भास्करः॥
मामप्याहुर्मुनिगणा वाल्मीकिस्त्वं मुनीश्वर।
वल्मीकात् सम्भवो यस्माद् द्वितीयं जन्म तेऽभवत्॥

पूर्वपरिचितं किरातं प्रकाशयामासुः। तेनैव चास्य वाल्मीकिरिति नाम प्रसिद्धिमापत्। इति।

वाल्मीकेः पूर्वं नाम समुत्पत्तिं पितरौ चाधिकृत्य भूयांसो मतभेदाः समुपलभ्यन्ते। तिलकाख्यरामायणटीकाकृतः वल्मीकमृत्कूटप्रभवत्वात् वल्मीकाख्यमुनिपुत्रत्वाद्वा वाल्मीकिरिति संज्ञेति विकल्पं कृतवन्तः। तत्र वाल्मीकेः पूर्वनामविचारो नास्त्येव। (१)

रामायणशिरोमणिटीकाकारा बहुकालिकतपस्यया वल्मीककूटप्रच्छन्नस्य वरुणेन कृतया वृष्ट्या वल्मीकभेदनस्य कृतत्वात् प्रकाशितत्वेन वाल्मीकिरिति प्राचेतस इति च संज्ञाद्वयं गौणपुत्रत्वप्रयुक्तं भृगोः मुख्यपुत्रत्वाच्च भार्गवादिसंज्ञामपि समुपपादयन्ति। (२) ऋक्ष इत्यस्य मुख्यं नाम इति तत्रैवोपपादितमास्ते।

---

इत्युक्त्वा ते ययुर्दिव्यगतिं रघुकुलोत्तम।
अहं ते राम नाम्नश्च प्रभावादीदृशोऽभवम्॥ इति।
( अध्यात्मरामायणे अयोध्याकाण्डे षष्ठसर्गः )

१ उक्तं हि तिलकाख्यरामायणटीकाकृता रामेण रामायणीयप्रथमश्लोकटीकायाम्—'वाल्मीकिः वल्मीकस्यापत्यम्। वल्मीकप्रभवो यस्मात् तस्माद् वाल्मीकिरित्यसौ। इति ब्रह्मवैवर्त्तोक्तेः। वल्मीकप्रभवत्वेन गोणीपुत्रादिवत् गौणमस्य वल्मीकापत्यत्वं गृहीत्वेञ् साधुरपत्यार्थः। यद्वा वल्मीक इति ऋषिविशेषस्य संज्ञेत्याहुः।' इति।

२ उक्तं रामायणशिरोमणिटीकायाम्,—'वाल्मीकिर्वल्मीकगौणपुत्रः।... गौणत्वञ्च बहुकालिकतपःस्थितिहेतुकवल्मीकाकृतित्वप्राप्त्यनन्तरं वरुणकृतवृष्ट्या निष्पन्नत्वात्, अत एव वक्ष्यमाणप्राचेतसव्यवहारोऽपि न विरुद्धः। प्रचेतोनिरूपितगौणपुत्रत्वस्यापि अस्मिन् सुवचत्वात् गौणपुत्रत्वयोर्विरोधाभावात्। अत एव भृगुपुत्रत्वमप्यस्मिन् न विरुद्धम्। भृगुनिरूपितमुख्यपुत्रत्वस्य अस्मिन् विद्यमानत्वात्। गौणपुत्रत्वमुख्यपुत्रत्वयोर्विरोधाभावात्। अत एव—'अथा-

भूषणाख्यरामायणटीकाकारो गोविन्दराजोऽपि प्रायेण शिरोमणि-टीकाकारमतमेवानुवर्तमानो दृश्यते। तत्र तावदयं विशेषः यत्, भृगुवंश्यः कश्चित् प्रचेता नाम, तदपत्यतया वाल्मीकेः प्राचेतस इति संज्ञा। 'चक्रे प्रचेतसः पुत्रस्तं ब्रह्माप्यन्वमन्यत' इत्यादौ प्रचेतःपुत्रत्वस्य स्पष्टमुक्तेः। (३)

---

ब्रवीन्महातेजा ब्रह्मा लोकपितामहः। बल्मीकप्रभवो यस्मात् तस्माद् बाल्मीकि-रित्यसौ' ॥ इति ब्रह्मवैवर्तवचनम्। 'अतृप्तस्तं मुनि वन्दे प्राचेतसमकल्मषमिति लवकुशोक्तिः। 'ऋक्षोऽभूद् भार्गवस्तस्माद् बाल्मीकिर्योऽभिधीयते'। इति विष्णुपुराणवचनञ्च संगच्छते।......अतएव ज्ञापकादस्य ऋक्ष इति रूढनाम। तस्यात्रानुक्तिस्तु आत्मनाम गुरोर्नामेत्यादिस्मृत्या आत्मनामग्रहणस्य निषिद्ध-त्वात् निषेधस्य च रूढनामविषयत्वात्।' इति।

३ उक्तं हि गोविन्दराजटीकायाम्,—'बल्मीकस्यापत्यं बाल्मीकिः। अत इञ् इति इञ्प्रत्ययः। नन्वसौ कथं बल्मीकापत्यं, यतो भृगुपुत्र एवायं प्रतीयते। तथा च विष्णुपुराणे 'ऋक्षोऽभूद् भार्गवस्तस्माद् बाल्मीकिर्योऽभि-धीयते'। इति। अत्रापि उत्तरकाण्डे वक्ष्यति 'भार्गवेणेति संस्कृतौ' 'भार्गवेण तपस्विना' इति च। अन्यत्र प्रचेतोऽपत्यत्वमभिधीयते। 'चक्रे प्रचेतसः पुत्रस्तं ब्रह्माप्यन्वमन्यत'। इति। 'वेदः प्राचेतसादासी'दिति च प्रसिद्धम्। अतः कथमस्य बल्मीकापत्यत्वम्? उच्यते,—निश्चलतरतपोविशेषेणास्य बल्मीका-वृतौ जातायां प्रचेतसा वरुणेन कृतनिरन्तरवर्षेण प्रादुर्भावोऽभूदिति भृगुपुत्रस्यै-वास्य प्रचेतोऽपत्यत्वं बल्मीकापत्यत्वञ्च सङ्गच्छते। ननु कथं तत्प्रभवत्व-मात्रेण तदपत्यत्वम्? नैवम् गोणीपुत्रः कलशीसुत इति तत्प्रभवेऽपि बहुल-मुपलब्धेः। उक्तं च ब्रह्मवैवर्ते—'अथाब्रवीन्महातेजा ब्रह्मा लोकपितामहः। बल्मीकप्रभवो यस्मात् तस्माद् बाल्मीकिरित्यसौ'। इति। मास्तु अपत्यार्थत्वं तथापि बाल्मीकिशब्दः साधुरेव गहादिषु पठितत्वात्। यद्वा भृगुवंश्यः कश्चित् प्रचेता नाम तस्यायं पुत्र ऋक्षो नाम, 'चक्रे प्रचेतसः पुत्र' इति पुत्रत्वाभि-

स्कन्दपुराणे विष्णुखण्डे वैशाखमाहात्म्ये एकविंशाध्याये दृश्यते कृणुर्नाम मुनिः कठोरं तपस्तप्यमानो वल्मीकाच्छन्नदेहतया वल्मीक इति ख्यातो बभूव, तेनैव स्त्रीस्मरणात् स्खलितेन्द्रियेण कस्याश्चित् शैलुष्यामुत्पाद्यमानः किरातधर्मा पुत्रः कालेन रामायणकर्ता वाल्मीकिरिति ख्यातोऽभूत्। (४)

स्कन्दपुराणे आवन्त्यखण्डे अवन्तीक्षेत्रमाहात्म्ये चतुर्विंशाध्याये भृगुवंशजो विप्रः सुमतिर्नाम, तस्य कौशिकी नाम भार्या, तस्यामुत्पन्नस्तस्य पुत्रः अग्निशर्मा नाम ; तस्य वेदादिविमुखस्य दस्युवृत्त्यादिव्यापारास्तदुपशान्तिश्च अध्यात्मरामायणादिवृत्तभागैः प्रायेण तुल्यतां दधते। निरुक्तानि त्रीणि नामानि नान्यत्र समुपलभ्यन्ते। तत्रत्यवृत्तभागः सविस्तरः सुस्पष्टश्च (५)। शतकोटिरामचरितान्तर्गतश्रीमदानन्दरामायणे वाल्मीकीये

---

धानात्। भार्गवभृगुनन्दनशब्दौ रामे राघवरघुनन्दनशब्दवदुन्नेयौ। वाल्मीकिशब्दः पुंवत्त्वोपचाराद् अत एव क्वचित् वाल्मीकेन महर्षिणा इति सम्बन्धमात्रे अण् प्रयुज्यते।' इति। ( रामायणे बालकाण्डे १म-सर्गे १म-श्लोकटीका )।

४ कृणुर्नाम मुनिः कश्चित्तस्मिन्नेव सरोवरे।
तपो वै दुस्तरं तेपे बाह्यव्यापारवर्जितः॥
वल्मीकमभवद् देहे तस्य कालेन भूयसा।
वल्मीक इति तं प्राहुरतो वै मुनिपुङ्गवम्॥
पश्चात्तपोविरामान्ते कृणौ स्मृतिपथं गते।
स्त्रियोऽनुस्मरतो राजन् स्खलितं चेन्द्रियं मुनेः॥
जग्राह शैलुषी काचित्तस्यां जज्ञे वनेचरः।
लोके प्रख्यापयामास कर्मबन्धनिकृन्तनीम्॥
( स्कन्दपुराणे विष्णुखण्डे वैशाखमाहात्म्ये २१ अध्यायः )

सनत्कुमार उवाच—

आसीद् व्यास पुरा विप्रः सुमतिर्भृगुवंशजः।
रूपयौवनसम्पन्ना तस्य भार्याथ कौशिकी॥

राज्यकाण्डे चतुर्दशसर्गे बाल्मीकेरनेकेषां जन्मनां वृत्तान्ताः समुपलभ्यन्ते। तत्र कुत्रापि रत्नाकर इति नाम नास्ते। आनन्दरामायणस्य निरुक्त-सर्गीयसुविस्तरसन्दर्भपाठेनैव पाठकानां ते सर्वे विषयाः स्कन्दपुराणादितः केचन विशेषाश्च बोधविषयतां यास्यन्तीति ग्रन्थगौरवभिया नेह तत्सन्दर्भाः समुद्ध्रियन्ते। आनन्दरामायणसंसूचिता बाल्मीकेः पूर्ववृत्तान्ताः सुतरां

---

तस्य पुत्रः समुत्पन्नो ह्यग्निशर्मेति नामतः।
स पित्रा प्रोच्यमानोऽपि वेदाभ्यासं न मन्यते॥
ततो बहुतिथे काले ह्यनावृष्टिरजायत।
तस्यां विपद्गतः सोऽथ दक्षिणामाश्रितो दिशम्॥
ततोऽसौ सुमतिर्विप्रः सभार्यः सपुत्रस्तथा।
विदेशं काननं प्राप्तः कृत्वा आश्रममाश्रितः॥
आभीरैर्दस्युभिः सार्द्धं सङ्गोऽभूदग्निशर्मणः।
आगच्छति पथानेन यस्तं हन्ति स पापकृत्॥
स्मृतिर्नष्टा गता वेदा गतं गोत्रं गता श्रुतिः।
कस्मिंश्चिदथ काले तु तीर्थयात्राप्रसङ्गतः॥
सप्तर्षयः पथा तेन सुव्रताः समुपस्थिताः।
अग्निशर्माथ तान् दृष्ट्वा हन्तुकामोऽब्रवीदिदम्॥
वस्त्राणीमानि मुञ्चध्वं छत्रिकोपानहौ तथा।
हन्तव्या हि मया यूयं गन्तारो यमसादने॥
तस्य तद् वचनं श्रुत्वा अत्रिर्वचनमब्रवीत्।
अस्मत्पीडनजं पापं कथं ते हृदि वर्त्तते॥
वयं तपस्विनो भूत्वा तीर्थयात्राकृतोद्यमाः।

अग्निशर्मोवाच—

ममास्ति माताथ पिता सुतो भार्या गरीयसी।
पोषयामि सदा तांस्तु एतन्मे हृदि संस्थितम्।

विस्तृताः सुगमाः सोपपत्तिकाश्चेति तत्पाठाय वाचकमहोदयान् साग्रहं प्रविवर्तयिषामः। वयमस्मिन् रूपके वाल्मीकेः पूर्वनामविषये तत्पितृनाम-

---

अत्रिरुवाच—

पित्रादीनाशु पृच्छस्व स्वकर्मोपार्जितं प्रति।
यद् युष्मदर्थं क्रियते पापं तत् कस्य कथ्यताम्।
यदि ते कथयन्ति स्म मा मृषा प्राणिनोऽवधीः।

अग्निशर्मोवाच—

न कदाचिन्मया ते तु संपृष्टा ईदृशं वचः।
युष्माकं वचसा मेऽद्य प्रतिबोधः प्रवर्तते।
गत्वा पृच्छामि तान् सर्वान् कस्य भावश्च कीदृशः।
यूयमत्रैव तिष्ठध्वं यावदागमनं मम।
इत्युक्त्वा तान् जगामाशु पितरं स्वमुवाच ह।
धर्मस्य प्रतिघातेन प्राणिनां पीडनेन च।
सुमहद्दृश्यते पापं कस्य तत् कथ्यतां मम।
पिता प्राह तथा माता नापुण्यमावयोरिह।
त्वं जानासि यत् कुरुषे कृतं भाव्यं पुनस्त्वया।
तयोस्तद् वचनं श्रुत्वा भार्यां वचनमब्रवीत्।
तयाप्युक्तं न मे पापं पापमेतत्तवैव तु।
तद् वाक्यमब्रवीत् पुत्रं बालोऽहमिति सोऽब्रवीत्।
तज्ज्ञात्वा हृदयं तेषां चेष्टितञ्चैव तत्त्वतः।
नष्टोऽहमिति मन्वानः शरणं मे तपस्विनः।
क्षिप्त्वाथ लगुडं कृष्णं येन वै जन्तवो हताः।
प्रकीर्य केशांस्त्वरित ऋषीणामग्रतः स्थितः।
प्रणम्य दण्डपातेन ततो वचनमब्रवीत्।
न मे माता न च पिता न भार्या न च मे सुतः।

विषये च स्कन्दपुराणादिमतं परिहृत्य वङ्गविषये अन्यत्र च समतिप्रसिद्ध-तया आबालवृद्धं सुदृढसंस्कारगोचरतया च वङ्गभाषामयपद्यरामायण-प्रजापतिकृत्तिवासादिपरिकल्पितं वाल्मीकेः रत्नाकरेति पूर्वनाम तत्पितुश्च

---

सर्वैस्तैः परिमुक्तोऽहं भवतां शरणं गतः ।
सुष्ठूपदेशदानान्मां नरकात्त्रातुमर्हथ ।
एवं तं वादिनं दृष्ट्वा ऋषयोऽखिमथाब्रुवन् ।
भवतो वचनादस्य प्रतिबोधः समागतः ।
भवतायमनुग्राह्यः शिष्यो भवतु ते मुने ।
तथेत्युक्त्वाथ तान् प्राह चात्रिर्ध्यानं समाचर ।
अनेन ध्यानयोगेन महामन्त्रजपेन च ।
अनेकदुस्तरात्युग्रपापकृज्जनघातकः ।
संस्थितो वृक्षमूले त्वं परां सिद्धिं गमिष्यसि ।
इत्युक्त्वा ते ययुः सर्वे सकामं सोऽपि तत्र वै ।
तद् ध्यानस्थोऽभवद् योगी वत्सराणि त्रयोदश ।
तस्योपर्यभवत्तस्य वल्मीकोऽविचलस्य च ।
निवृत्तास्तु पथा तेन मुनयस्तत्र शुश्रुवुः ।
उदीरितं ध्वनिं तेन वल्मीके विस्मयान्विताः ।
ततः खनित्वा वल्मीकं काष्ठीभूतोरुशङ्कुभिः ।
तं दृष्ट्वोत्थापयामासुर्मुनयो नयसंयुतम् ।
नमश्चक्रेऽथ तान् सर्वान् स विप्रो मुनिपुङ्गवान् ।
तान् प्राह प्रणतो भूत्वा तपसा दीप्ततेजसः ।
प्रसादाद् भवतामद्य ज्ञानं लब्धं मया शुभम् ।
दीनोऽहमुद्धृतः सर्वैर्मग्नोऽहं पापकर्दमे ।
श्रुत्वा तस्येति तद् वाक्यमूचुः परमधार्मिकाः ।
वल्मीकेऽस्मिन् स्थितः पुत्र यतस्त्वमेकचित्ततः ।

च्यवनेति नामैव समवलम्बितवन्तः। बङ्गभाषामयरामायणकविः कृत्तिवासः पुनः कुतो मूलग्रन्थादेतन्नामद्वयम् आसादितवानिति नैव निर्णेतुमर्हामः। अस्तु तस्य मूलं मास्तु वा, वयन्तु केवलं तदीयनाम्नोः सर्वत्र सामाजिकेषु सुचिरात् प्रभृत्येव प्रचरद्रूपत्वात् तदन्यथाकारेण सामाजिकानां भावविच्छेद-माशङ्कमानाः तदनुसृतामेव सरणिं सम्भावयन्तः स्वकृतौ तदुपादानं कुर्मः। तदत्र पुराणविदामुपपत्तिमतीं क्षमां समनुभवितुमिच्छामः। (६)

---

बाल्मीकिरिति ते नाम भुवि ख्यातं भविष्यति।
इत्युक्त्वा मुनयो जग्मुः स्वां दिशं तपसान्विताः।
गतेषु मुनिमुख्येषु बाल्मीकिस्तपतां वरः।
कुशस्थल्यामथागम्य समाराध्य महेश्वरम्।
तस्मात् कवित्वमासाद्य चक्रे काव्यं मनोरमम्।
रामायणञ्च यत् प्राहुः कथां सुप्रथमस्थिताम्। इति
(स्कन्दपुराणे आवन्त्यखण्डे अवन्तीक्षेत्रमाहात्म्ये २४ अध्यायः)

६ उक्तं हि कृत्तिवासेन बङ्गभाषामयपद्यरामायणे रामायणोत्पत्तिप्रकरणे—

'च्यवन मुनिर पुत्त नाम रत्नाकर
दस्युवृत्ति करे सेइ बनेर भितर।
... ... ...
ब्रह्मा बले तव नाम रत्नाकर छिल
आजि हइते तव नाम बाल्मीकि हइल।
येइ राम नाम हैते हइला पवित्त
सेइ ग्रन्थ रच गिया रामेर चरित्त।

अस्यानुवादः—

च्यवनस्य मुनेः पुत्रो रत्नाकर इति श्रुतः।
गहनाभ्यन्तरे सोऽसौ दस्युवृत्तिपरोऽभवत्।
... ... ... ...

अध्यात्मरामायणादि-प्राचीनसाहित्यग्रन्थप्रसिद्धं वाल्मीकेः पूर्वं वृत्तं सूत्रमात्ररूपेण परिगृहीतवता मया प्रकृतरूपकनिर्माणे प्रारम्भादन्तपर्यन्तं वस्तुविनियोगे शीलपरिकल्पने च

'यत् स्यादनुचितं वस्तु नायकस्य रसस्य वा ।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत्' ॥
'अविरुद्धं तु यद् वृत्तं रसादिव्यक्तयेऽधिकम् ।
तदप्यन्यथयेद्धीमान न वदेद् वा कदाचन' ॥

इत्याद्यालङ्कारिकवचनबलादेव यदवलम्बितं निरङ्कुशं स्वातन्त्र्यं, तेन नाटकीयवस्तुनि प्रकर्षो वा भूयानपकर्षो वेत्यत्र श्रीमतां रसभावानुभव-दक्षाणां विबुधधौरेयाणामेव निरपेक्षं विचारं प्रमाणकोटौ स्थापयामः ।

अत्र हि रूपके सामाजिकानां बोधसौकर्याय रसप्रतीतिविलम्बप्रयुक्त-लोकातीतसुखविच्छेदपरीहाराय च गद्यभागेषु पद्यभागेषु सङ्गीतकदम्बकेषु च यथासम्भवं दुरूहपदादिसन्नियोगपरिहारेण सन्निवेशिताः सुपठाः सुगमार्थ-शब्दसम्भाराः । न खलु तथा समुपयुज्यन्ते विचित्रालङ्कारवक्रोक्त्यादि-समुपबृंहिता वाक्पद्धतयो रूपकेष्वभिनयप्रधानेषु यथा कथाकाव्य-महाकाव्य-खण्डकाव्यादिकेषु । अत एव नितरामनिच्छतामपि रूपककाव्यनिर्मातॄणां प्रवर्तितव्यमीदृशे वैचित्र्यविशेषपरिशून्ये वाङ्मयमार्गे । आशास्महे यदेतत् सर्वमनाकुलं विचार्य रूपकवाङ्मयसमालोचनायां निपुणधियः प्रवर्तिष्यन्ते ।

किञ्च साम्प्रतिके काले संस्कृतविद्यागरिष्ठेषु प्राकृतभाषाया विशेषतः प्रचारविरहेण प्राकृतभाषामयाः स्वल्पाः सुगमार्थाश्चापि सन्दर्भाः सातिशय-मायासं विना स्वं स्वमर्थं नैव बोधपदवीं लम्भयन्ति, समुत्पादयन्ति चातिमात्रं

---

ब्रह्मोवाच समाख्या ते रत्नाकर इति स्थिता ।
अद्य प्रभृति ते नाम बाल्मीकिरिति संस्थितम् ।
यतो रामाभिधानात्त्वं सम्प्राप्तोऽसि पवित्रताम् ।
ग्रन्थं रचय तस्मात्त्वं श्रीरामचरिताश्रयम् ।

विरागमन्तःकरणस्य। तत एव साम्प्रतं बहुत्र रूपकप्रयोक्तारः सामाजिकानां त्वरितरसोन्मेषमपेक्षमाणाः तत्तत्पात्रप्रयोक्तव्यप्राकृतभाषामयसन्दर्भाणां विपरिवर्तनेन प्रयुञ्जते गीर्वाणवाणीमयानेव वचनसङ्घातान्। अत एवास्माभिरपि प्रकृते रूपके प्राचीनालङ्कारिकोपदिष्टं नयमतिक्रम्य सर्वेषां पात्राणामविशेषेण संस्कृतपदमयान्येव वाक्यानि विनियोजितानि। तदेव सामाजिकानामनायासवस्तुविज्ञानाय त्वरित-रसोन्मेषाय च समुपयुक्तमिति प्राचीननयातिक्रममप्यदोषं मन्यमानाः सन्तुष्यामः।

सुविदितमेवैतत सहृदयगोष्ठीगरिष्ठानां यत् कालक्रमानुसारेण विविधशिल्पकलादीनां क्रमिकाभ्युदयव्यपेक्षया च मानसिकवासनाभेदाः समुपजायन्ते सामाजिकानामिति। यत्र किल काले प्रयोगमभिसन्धाय यद् रूपकं समपेक्ष्यते, तत्र तत्कालानुगुणगुणानुबन्धिविषयसङ्घातो नोपसंहितश्चेत् नोपयुज्यते तदिदं सन्तोषाय निःशेषाय तत्कालप्रभवाणां सामाजिकनिकुरम्बाणाम्। तदनुरोधादेव साम्प्रतिकसामाजिकभावानुगुणवस्तुसन्निवेशाय कृतोऽत्र मया यथामति प्रयत्नो भूयान्। साफल्ये वैफल्ये वा तत्प्रयत्नस्य रूपदक्षाणां गुणदोषप्रविभागविदां विदुषां रसिकतल्लजानाञ्च निरपेक्षमन्तःकरणमेव प्रमाणं, नान्यत्।

इदमत्र प्राप्तकालमभिधेयं यत् साम्प्रतं तत्तत्प्रदेशेषु सत्यपि तत्तन्माण्डलिक-व्यवहारानुकूलप्राकृतापभ्रंशभाषाप्रसारे सकलभाषाप्रसूतेः संस्कृतभाषायाः सार्वजनीनायाः सकलदेशसाधारण्या अपि नैव तावान् प्रसारः समादरो लोकायतेषु प्रयोजनेषु समुपयोगो वा विज्ञानगोचरताम्प्रतिपद्यते। तत एव हि साम्प्रतं नाविर्भवन्ति यथाकाममुत्कर्षवन्तः काव्यग्रन्था, नापि परितो मण्डयन्ति संस्कृतसाहित्यभाण्डागारं नवीननिबन्धकारसमुपहृतानि नवीनानि प्रशस्तिभाजनानि दार्शनिकादिनिबन्धरत्नानि। दुराग्रहवशेन हन्त केनचिद् विरचितेऽपि कस्मिंश्चित् संस्कृतनिबन्धे दुर्लभाः खलु कथञ्चित् तत्पाठपरिश्रमस्वीकर्तारोऽपि। निबन्धकारैः स्वीयवस्तुनो गौरवज्ञानप्रेरणया वा स्वकृतेः प्रकर्षपरीक्षणकाम्यया वा परप्रतिपादनेनात्म-

निबन्धस्य साफल्यसम्पिपादयिषया वा कथञ्चित् केचित् तदाकर्णने प्रवर्तिता अपि किञ्चित्कालोत्तरमसमाप्त एव निबन्धश्रवणे विमनायमानाः समुत्पादयन्ति तेषां निबन्धकृतां महान्तमान्तरं खेदम्। तत्तत्कारणकदम्बकेनैवाद्य लोके तिरोधानेन नवीनसंस्कृतग्रन्थनिर्माणसमारम्भसमुत्साहस्य क्रमशः क्षीणक्षीणतामाससाद भगवती कल्याणवती गैर्वाणी वाणी। इत्थं समापतितेऽपि भगवत्या गीर्वाणवाण्या वराकाणां तदीयसेवकानाञ्च सुमहत्येव विपत्सन्निपाते यदेषा संस्कृतसाहित्यपरिषत् संस्कृतसाहित्यसमुन्नयनैकव्रता मदीयामिमामतिक्षुद्रामपि कृतिं स्वीयद्रविणराशिव्ययेन निरतिशयसमुत्साहेन च प्राकाश्यं नीतवती तेनास्याः सुगभीरामान्तरिकीं कृतवेदितां निवेदयामः।

किञ्च एतदनुबन्धिका-सम्बन्धिवस्तुनिकुरम्बनिबन्धने मदीयसुयोग्यच्छात्रचरस्य वेथुनकलेजाख्यराजकीयमहाविद्यालयाध्यापकस्य श्रीमतः चिन्ताहरणचक्रवर्तिकाव्यतीर्थस्य रत्नाकरवृत्तान्तप्रतिपादकवङ्गभाषामयनिबन्धात् समासादितो मया सुमहानुपकारः, तथा एतद्ग्रन्थमुद्रापणादिविधौ मदीयप्रियच्छात्रस्य संस्कृतभाषामयनैकनिबन्धनिर्माणेन नैकग्रन्थसम्पादनाद्युत्कर्षेण च लब्धवर्णस्य प्रतिभानवतः संस्कृतसाहित्यपरिषत्पत्रिकासम्पादकस्य श्रीमत उपेन्द्रमोहनकाव्यसांख्यतीर्थस्यायुष्मतः संशोधनादिकृत्यपरम्परया समासादितं सुमहत् साहायकमिति ताविमौ नितरामाशिषा वर्द्धयामः।

अन्ते च सप्रश्रयं साशङ्कं सोपचारञ्च विशेषविदुषो वाचकमहत्तमान् अर्थयामहे, यद् भ्रमधर्मतया मानुषाणां स्वल्पज्ञतया च प्रकृतग्रन्थनिर्माणसाहसिकस्य प्रतिपदमेवात्र सम्भाव्यमानान् दोषानमी स्वभावसुलभकारुण्यप्रचयेन परिहरन्तः काचित्कमपि सन्तं गुणलेशं बहुलीकुर्वाणा मदीयप्रकृतग्रन्थनिर्माणपरिश्रमं नयन्तु सफलताम् इति शम्।

---

# धार्मिकेतिकर्तव्यता

[ निबन्धकः—कुप्पा श्रीआञ्जनेयशास्त्री ]

अस्मिन् भारते धर्मदेशेऽधुनार्षधर्मस्य महानुपप्लवः प्रादुर्भूतः। विषमेऽस्मिन् समये धार्मिकाणां कीदृशीतिकर्तव्यता ? यां नावमाश्रित्य उपप्लवार्णवमतितरामतितरेदार्षधर्म इत्ययं प्रश्नः सर्वानप्यास्तिकाग्रगण्यान् निमज्जयति विचाराम्बुधौ। तत्र वयं यथाशक्त्युपायनिवेदनेनास्माकीनसंवित्सार्थक्यमनुभवामः। अस्मदीयेऽल्पे प्रयत्ने गुणग्रहणपारीणा भवन्त्विति साञ्जलिबन्धमभ्यर्थयामहे सहृदयाग्रगण्यान् विद्वद्वरेण्यान्। धर्मविषये प्रस्तुतराजकीयशासननिर्मूलनाय प्रस्तुतराजकीयशासनसभासु धर्मपक्षपातिसज्जनप्रवेशनेन, तादृग्जनसङ्ख्याधिक्य( Majority )सम्पादनेन च स्वातन्त्र्यं सम्पादनीयम्। तेन च तन्निर्मूलनं सुलभम्। स च सभाप्रवेशो देशेऽस्मिन् सर्वस्मिन्नपि बहुधा धर्मप्रचारमन्तरा न सम्भवति। ततो धर्मप्रचारादेव अस्मदीयानां जनसम्मतयः (Votes) सुबहुश आपतिष्यन्ति। स च प्रचार आस्तिकाग्रगण्यैरलोलुपैः ( सवेतनैरवेतनैर्वा ) लौकिकैः पाश्चात्त्यविद्यासमर्थैर्वैदिकैश्च प्राच्यविद्यानिपुणैः कारयितव्यः। तेषाञ्च प्रचारकाणां वर्णाश्रमतत्त्वावबोधनाय, विशेषतः सर्वधर्माणामैहिकप्रयोजनावेदनाय च सर्वविधवैदुषीसमलङ्कृतपण्डितपरिमण्डितायाः सभायाः साहाय्यकम् आवश्यकम्। तया च सभया देशीयविद्वन्मणिभ्यः कञ्चन कञ्चन धर्ममधिकृत्य वैद्यकानुसारेण नीत्यादिनिखिलशास्त्रानुसारेण च यानि लौकिकप्रयोजनानि सन्ति तानि सर्वाण्यपि व्यासरूपेण संग्रहीतव्यानि। अत्र धर्मपक्षपातिदेशभाषापत्रिकादिसाहाय्यकमप्यावश्यकम्। अखिलस्यैतत्कार्यभारस्य निर्वहणाय धनसाहाय्यकमेव मुख्यतमम्। अतस्तादृशीं सभां निर्माय, निर्मितां वा सभामुक्तलक्षणलक्षितां कृत्वा यावच्छक्ति धनं सम्पाद्य उक्तप्रकारेण प्रचारः कारयितव्यः। एवं सत्यवश्यं फलोपलब्धिर्भविष्यति। एतदेवाद्यतनदेशकालानुरोधि शास्त्राविरोधि च। तदेतदसंशयमृषिसम्मतं भवत्येव। अशिष्टाप्रतिषिद्धमपि वा भवेत्। इति केचित्।

अन्ये त्वेवं भणन्ति—नायमनुकूलः पन्थाः। यदि विपुलावकाशोऽभ-

विष्यत् तदाऽऽचरणयोग्यः फलकारी चायमभविष्यत् । न तथाऽद्य । महात्मगान्धिमहाशयस्य विजृम्भणात्पूर्वं तत्समकालं वाऽयमुद्यमः परिग्रहीतव्यः स्यात् तदाऽवश्यं फलकारी भवेदेव । इदानीन्तु तन्मतं दिगन्तव्याप्तमभवत् । तदीयाः प्रबला भूत्वा राज्यमप्याक्रम्य क्षणे क्षणे एकमेकं शासनं, पदे पदे एकमेकमभयशासनं (Ordinance) च कुर्वन्ति । तैश्च पुनःशासनायुधानि नूतनानि निर्माय, पुरातनानि च शातयित्वा धार्मिकशिरःसु प्रक्षिप्यन्ते । अतः कदाचित्स मार्गोऽपीदानीममार्ग एव, यतो भवने दह्यमाने कूपखननयत्नतुल्यः । इदानीन्तनधार्मिकावस्था "अग्रे व्याधः करधृतधनुः पार्श्वयोर्जालमाले पृष्ठे वह्निर्दहति विपिनं सर्वतः सारमेयाः । एणी गर्भादलसगमना डिम्भकैर्लग्नपादा"—इत्यादिकुरङ्गपञ्चकोक्तैतदेण्यवस्थासदृशी । अत एव मन्ये समन्तादूभयभीता एणी यथा निःसहाया "लक्ष्मीनाथ त्वमसि शरणं किं करोमि क्व यामी"त्येवं लक्ष्मीनाथमेव तथाभूतायां विपत्तौ शरणमापन्ना, अस्माकमपि तथात्र स एव शरणम्, नान्यः । नूनं तच्छरणागतिरेवास्मदिष्टसाधनम् । इतिकर्तव्यता तु विदितचरैवास्तिकानां सर्वेषामपि । एवमेव सर्वे वयं प्रतिज्ञापूर्वकं बोधिता गीतोपदेष्ट्रा भगवता—"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्" इत्यनेन । इदमत्र हृदयं भगवतः—यदा वर्णाश्रमधर्मस्य हानिर्भवति अधर्मस्य चाभ्युत्थितिस्तदाऽऽत्मानं सृजाम्येव । नात्र स्वल्पोऽपि संशयः कार्य इति । इदमीश्वरहृदयं ये जानन्ति, ते तदाराधनं विना अन्यत्साधनं धर्मरक्षणायास्तीति न मनसाऽप्यूरीकुर्वन्ति । तथा यतमानेषु मध्ये कस्मिंश्चित्काले केषांचिद्बन्धनं सम्भवेत् । पुनः कुत्रचित्काले कैश्चिद्भाग्यशालिभिः फलमनुभावयिष्यति भगवान् स्वप्रतिज्ञाभङ्गभीरुः । पूर्वेषामपि भगवदाराधनस्येदमेव फलं यद्धर्मरक्षणाख्यम् । विषयेऽस्मिन्नेषा रामायणगाथाऽपि विशेषेणादर्तव्या तात्पर्यतः । श्रीमद्रामायणेऽरण्यकाण्डे षष्ठसर्गः—

"वैखानसा बालखिल्याः सम्प्रक्षाला मरीचिपाः ।...

सजपाश्च तपोनित्यास्तथा पञ्चतपोऽन्विताः ।

सर्वे ब्राह्मया श्रिया जुष्टा हठयोगाः समाहिताः।
शरभङ्गाश्रमे राममभिजग्मुश्च तापसाः।...
एहि पश्य शरीराणि मुनीनां भावितात्मनाम्।
हतानां राक्षसैर्घोरैर्बहूनां बहुधा वने।...
एवं वयं न मृष्यामो विप्रकारं तपस्विनाम्।
क्रियमाणं वने घोरं रक्षोभिर्भीमकर्मभिः।
ततस्त्वां शरणार्थं च शरण्यं समुपस्थिताः।
परिपालय नो राम! वध्यमानान्निशाचरैः।...
एतच्छ्रुत्वा तु काकुत्स्थस्तापसानां तपस्विनाम्।
इदं प्रोवाच धर्मात्मा सर्वानेव तपस्विनः।
नैवमर्हथ मां वक्तुमाज्ञप्तोऽहं तपस्विनाम्।
केवलेनात्मकार्येण प्रवेष्टव्यं मया वनम्।
विप्रकारमपाक्रष्टुं राक्षसैर्भवतमिमम्।" इति

एते महर्षय आहारनियमोपपन्ना उग्रव्रतास्तीव्रतपसो ब्राह्मश्रिया जुष्टा धर्मध्वंसिराक्षसैर्बहुधाऽपकृता विनिहतसत्क्रियाः सन्तो राक्षसेभ्यो धर्मं प्राणांश्च रक्षितुमपारयन्तस्तदर्थमवतीर्णं श्रीरामं शरणं जग्मुः। श्रीरामस्तु धर्मरक्षणमात्मकृत्यमिति प्रकटयन् स्वकृत्यं निर्वाहयामास इत्यनेन कथनेन धर्मे रक्षितव्ये जायमानायाः साधनाकाङ्क्षाया इतिकर्तव्यताकाङ्क्षायाश्च शान्तिरुक्तविधिनैव कार्येति स्पष्टं प्रतिपाद्यते इति।

वयन्तु ब्रूमः—

एतन्मतद्वयसम्मेलनमावश्यकमिति। मतद्वयसम्मेलनं नाम भगवदाराधनपुरस्सरं फलं भगवदायत्तं निश्चित्य, एतत्कालोचितस्य पूर्वोक्तसभानिर्माणधर्मप्रचारादिकस्य निर्वहणमेव। न चात्र वृद्धसम्मतिर्नास्तीति भ्रमितव्यम्। भगवत्सम्मतेरेव सत्त्वात्। तथा हि:—"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" इत्यादिभिरुद्बोध्य पार्थं युद्धाय प्रोत्साहयतो गीतोपदेष्टुर्भगवत इदमेव हृदयमिति शिवम्।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम्॥

January, 1940 | १८६१-शकीये पौषे २२श-वर्षस्य ६म-संख्या | Vol. XXII No. 9.


## संयमो नः शुभावहः

[ निबन्धकः—श्रीशशिभूषण-स्मृतितीर्थ-ज्योतिर्विनोदः ]

अये, सदाचारपरायणाः कल्याणाकाङ्क्षिणः शुभाशयाः, शास्त्रविधिमनुसृत्य व्यवहारपरायणेषु मानवेषु सततं कल्याणमेव जायते, तदितरेषु पुनरकल्याणम्। अत एवोक्तं भगवता भगवद्गीतायाम्—

"यः शास्त्रविधिमुत्सृज्य वर्तते कामचारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥"

सकलमानवमङ्गलहितोपदेशिन्यां श्रुतौ स्मृतौ च यादृशं विधानं वर्तते तदनुवर्तनपुरःसरं व्यवहरतामस्माकं भुक्तिर्मुक्तिश्च युगपत् सुलभे भवतः। मानवाः खलु प्रायो भोगलोलुपाः। केनोपायेनाक्षतस्वास्थ्येन दीर्घायुषा दीर्घकालं भोगः कर्तुं शक्यते, श्रुतिस्मृत्यादिशास्त्रनिवहेन विधिनिषेधवचोभिः स उपायो मानवानां प्रदर्शितः। अहो, मानवाः खलु तादृशशास्त्रवाक्यमवज्ञयैव नाद्रियन्ते। भोगपरतन्त्राणां मानवानां न खलु शास्त्रविधिना भोगः प्रतिषिद्धः किन्तु वैधभोगः प्रदर्शितः। न च कदापि वैधभोगेन मानवाः शक्तिहीना उच्छृङ्खलस्वभावा वा भवितुमर्हन्ति। विधिनिषेधप्रतिपालनपूर्वकं वृत्त्यनुशीलनेन हितमन्तरेण नाहितं सम्भवति। अस्माकं

पूर्वपुरुषा महर्षयः सुसंयतहृदयाश्चतुराश्रमफलमुपभुञ्जाना मानवत्वस्य पूर्ण-साफल्यं समधिगतवन्तः। ते च महर्षयो दीर्घायुषो नीरोगशरीराः संयमावलम्बनेनैव परमानन्दहृदया अव्याहतशक्तयश्चासन।

ब्रह्मचर्याश्रमे संयमाभ्यासवशेन, गार्हस्थ्याश्रमेऽपि दाम्पत्यप्रणयादि-सुखे व्यापृता न मोहवशमापन्नाः संवृत्ताः। ते च महात्मानः कर्तव्यबोधेनैव सांसारिककृत्यं समाचेरुर्न भोगोन्मत्ततयेति।

शास्त्रविधिमनुल्लङ्घ्य प्रचरतां तेषां न कदापि शक्तिवैकल्यं सञ्जातम्। तदीयमहावंशोद्भवानामाधुनिकानामस्माकं यादृशी शोचनीया दशा समायाता, तत् केवलं विधिनिषेधप्रतिपालनविरहादेवेति स्वीकरणीयम्। इदानीन्तनाः पाश्चात्त्यशिक्षाभिमानिनः प्रायः स्वल्पवयस्का युवकाश्च शास्त्रवाक्येषु महतीमवज्ञामेव प्रकाशयन्ति। तेषां हावभावप्रदर्शनेनानुमीयते, शास्त्रं खलु तेषां परमः शत्रुः। किन्तु शास्त्रविधिलङ्घनेन ते महापुरुषाः पाश्चात्त्यसभ्यतानुकरणेन च क्रमशो हीनशक्तयोऽकालपलितकेशकलापा यौवनेऽपि धृतनेत्रदर्पणाः स्वास्थ्यहीनाः प्रायशो रोगपीडितपरिजनाः परि-दृश्यन्ते। ये पुनर्यथाशक्ति शास्त्रपथानुवर्तिनस्तेषां न तथा शोचनीया दशा संजाता। ते च षष्टिहायना अपि दृढदशना अपलितकेशकलापा उपनयन-विहीना अपि सूक्ष्मदर्शनाः सुस्थदेहाः कर्मदक्षा दृश्यन्ते। अहो, पश्यन्तोऽप्यमी पाश्चात्त्यशिक्षाभिमानिनः कथंकारं शास्त्रानुशीलनपरा न भवन्ति? न तज्ज्ञातुं शक्यते। मन्ये कुशिक्षैव तानधो नेतुं सततं यतते। किं वा कुशिक्षाजन्यसंस्कारवशेनैव तेषामेतादृशी दशा समुपागता। अनेनैव जातेरवनतिर्भवतीति विज्ञायते। यावच्च भारतीयाः सनातनधर्मपथावलम्बिनो न भवेयुस्तावत् परःसहस्रप्रयत्नेनापि न जातीयोन्नतिर्भविष्यतीति नास्ति विषयेऽस्मिन संशयावकाशः। न हि मनःसंयोगपूर्वकं शास्त्रमनधीत्य शास्त्रेष्ववधीरणा समुचिता।

शास्त्रवाक्यावज्ञया न केवलं स्वस्य परिणामदुःखभोक्तृत्वं, जातेरप्यधो-नयनमवश्यम्भावीति। शास्त्रं हि सर्वेषां सुखभोगस्य सुपथं निर्दिशति,

न हि शास्त्रं मानवानां शत्रुः किन्तु परममित्रमेव। मोहाविष्टचेतस एव मित्रभाषितमिव शास्त्रसुभाषितं नाकर्णयन्ति। शिक्षिता अशिक्षिताश्च प्रायः सर्वे सर्वशास्त्रसारं भगवद्गीताशास्त्रं समाद्रियन्ते, श्रद्धालवः खलु गीतायाम्। तदीयश्लोकमेवालम्ब्य प्रबन्धोऽयं प्रकाशितः। तत्र भगवता श्रीकृष्णेनाभिहितं "ये पुनः शास्त्रविधिलङ्घनेन स्वेच्छाचारिणो भवन्ति, ते कदाचिदपि न सिद्धिं न सुखं न च परमां शान्तिं प्राप्नुवन्ति।" एतेनैतदवसीयते शास्त्रसम्मताचारेणैव सिद्ध्यादयो लभ्यन्ते। न हि जगति सुखप्रयासिनो मानवा न सन्ति।

"सुखं वाञ्छन्ति सर्वे हि तच्च धर्मसमुद्भवम्।
तस्माद्धर्मः सदा कार्यः सर्ववर्णैः प्रयत्नतः॥"

इति दक्षसंहिता। अत एव सुखप्रार्थिभिर्धर्मोऽनुष्ठेय एव। न हि धर्मेण विना सुखमुत्पद्यते; धर्माचरणमेव सुखस्य निदानम्। धर्माचरणे च शास्त्रस्य प्रयोजनं, न तेन विना धर्माचरणं सम्भवति, अलौकिकस्य धर्मस्य शास्त्रमात्रावगम्यत्वात्। न हि एकादश्युपवासादिषु धर्मो भवतीति प्रत्यक्षेण लौकिकवाक्येन वा परिज्ञातुं शक्यते। स्वेच्छया प्रचरतां मानवानां सुखशान्तिविरहो भवेदिति निश्चित्य परमकारुणिकैर्महर्षिभिर्मानवहितैषिभिर्वेदार्थस्मरणेन मन्वादिभिर्धर्मशास्त्राणि प्रणीतानि। यथा जनकजननीशासनेन सन्तानस्य कल्याणमेव जायते, तथा शास्त्रशासनेन मानवानां परमकल्याणमेव जायते। वैधभोगपक्षपातिनी खलु गीता। अत एवोक्तम् "बलं बलवतामस्मि कामरागविवर्जितम्। धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ॥" हे भरतर्षभ, अर्जुन; अहं बलवतां जनानां कामरागविवर्जितं बलमस्मि। एवमहं भूतेषु प्राणिषु धर्माविरुद्धः कामोऽस्मि। भगवान् स्वकण्ठत एवाभिहितवान्, "अहं धर्माविरुद्धः कामः।" अत्रैव संयमस्य प्रयोजनीयत्वम्। न हि संयममन्तरेण धर्माविरुद्धेन कामेन मानवानां परितृप्तिः सम्भवति। स एव धर्माविरुद्धः कामः, यः शास्त्रपथानुसारेण प्राप्तः। मानवा यदि शास्त्रविधानानुसारेण सदाचारं परिपालयन्ति तदा

सर्वविधसुखशान्तिलाभेन कृतार्था भवेयुरिति बुद्ध्वापि विमूढचेतसो मानवा नावधारयन्ति। किं कर्तव्यं ? किमकर्तव्यं ? कः संयमः को वा व्यभिचारः ? सर्वेषामेतेषां यथार्थमुपदेशकं शास्त्रमेव। गीतायामभिहितम्—

"तस्माच्च शास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रं विधानोक्तं कर्म कर्तुमिहार्हसि॥"

शास्त्रं श्रुतिस्मृतिपुराणादिकं कर्तव्याकर्तव्यविषये प्रमाणम्। शास्त्रार्थसन्देहे शास्त्रानुशिष्टसदाचारपरायणानामुपदेशो ग्रहणीयः। अथवा गुरूपदेशो ग्राह्यः। किन्तु सुमहद् दुःखमिदानीं संजातं यत् शास्त्रं गुरुश्च द्वे एते पाश्चात्त्य-शिक्षितानामवज्ञाविषयौ संवृत्ते। यदि ते स्वाभिमानं परिहरन्तः संयमशिक्षाभ्यस्ताः परमाप्तवाक्यशास्त्रानुवर्तिनश्च भवन्ति तदैव जातेरुन्नतिर्भवेत्। ते च परमां शान्तिं प्राप्स्यन्तीति, दृढचित्तो ब्रवीमि।

---

# प्राचीनसाहित्ये विज्ञानपरिचयः

[ निबन्धकः—श्रीकालीपद-काव्य-व्याकरणतीर्थः ]

## [ मूर्त्तितत्त्वम् ]

अयि! प्रेक्षावन्तः सहृदयाः प्रियपाठकमहाभागाः! शिल्पशास्त्रात्मकं कञ्चन निबन्धं भवतां पुरतः समुपहरिष्यामीति इतः प्राक् प्रतिश्रुतमासीत्। तदद्य प्राक्प्रतिज्ञातस्य निबन्धस्य समुपहारः क्रियते।

पञ्चरात्रागमान्तर्गत"हयशीर्षपञ्चरात्र"*नाम्नि पुस्तके प्रतिमाशिल्पं प्रासादशिल्पं चावलम्ब्य बहवो विषया वर्तन्ते। प्रथमतस्तावत् किं नाम

---

* पुस्तकमिदं माननीय-श्रीयुक्त-कुमार-शरत्कुमार-रायमहोदयस्य संस्कृत-ग्रन्थागारे सुरक्षितं वर्तते।

पञ्चरात्रमिति निर्णेतव्यम्। पञ्चविधं रात्रं यत्र इति वाक्येन पञ्चरात्रमिति पदं निष्पन्नम्। रात्रपदन्तु ज्ञानपरम्—

"रात्रन्तु ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम्। पञ्चरात्रमिति ख्यातम्" इति "नारदपञ्चरात्रे" प्रोक्तम्। "शब्दस्तोममहानिधौ" अपि "पञ्चरात्र"शब्दो द्रष्टव्यः। हयशीर्षीयप्रथमखण्डस्य चतुर्थपटले प्रतिष्ठाविहित-सद्गुरुलक्षणनिर्णयावसरे—

"आकाशवायुतेजांसि पानीयं वसुधा तथा।
एता वै रात्रयः प्रोक्ता ह्यचैतन्यास्तमोत्कटाः"॥

इत्युक्तमास्ते। अत्राकाशादयो वाय्वन्ताः पदार्था रात्रिशब्देनाभिधीयन्ते। तत्र हेतुमुपन्यस्यति "ह्यचैतन्यास्तमोत्कटा" इति विशेषणाभ्याम्। हि यस्माद् आकाशादयः पञ्च अचैतन्याश्चैतन्यशून्या जडाः, तमोत्कटा उत्कटतमोगुणाश्च।

अहङ्कारस्य तमःप्रधानादंशात्तेषामुत्पादात् जडत्वावरकत्वादिसाधर्म्येण तेषां रात्रित्वमभ्युपगन्तव्यम्। ततश्च—

"रात्रीणामप्यथैतासां व्यतिरिक्तं निरञ्जनम्।
स यदा बुध्यते तत्त्वं तदा मुक्तोऽनुकीर्त्यते।
तदसौ भगवान् विष्णुः परमात्मा न संशयः"॥

इत्यादिग्रन्थेन रात्रिशब्दप्रतिपाद्यभौतिकदेहाभिमानिनो जीवात्मनो बद्धावस्था तद्व्यतिरिक्तस्य तु निरञ्जनस्य भगवतः परमात्मनो मुक्तावस्था सुधीभिरुन्नेया।

इदञ्च पञ्चरात्रं नाम शास्त्रं मृदादिमयानां मूर्त्तीनां निर्माणप्रतिष्ठादिशैलीं तथा प्रासादनिर्माणप्रतिष्ठादिपद्धतिञ्च विशेषेण वर्णयति। अन्ये च ये ये विषया ग्रन्थेऽस्मिन् प्रतिपादिताः, तानन्यत्र प्रतिपादयिष्यामि, तेषामस्य प्रबन्धस्य विषयबहिर्भूतत्वात्। अत्र केवलं प्रतिमाशिल्पविषयकाणि कानिचित् प्रमाणानि प्रदर्श्यन्ते।

हयशीर्षपञ्चरात्रस्याष्टादशपटले प्रतिमाशिल्पप्रारम्भे प्रतिमानिर्माणाय कर्मकुटीरस्थाननिर्णयमवलम्ब्य प्रोक्तम्—

"अतः परं प्रवक्ष्यामि प्रतिमालक्षणं परम् ।
यन्न कस्यचिदाख्यातं गुह्याद् गुह्यतरं परम् ॥
प्रासादस्योत्तरे भागे शिलां नीत्वा तु देशिकः ।
कृत्वा कर्मकुटीं रम्यां प्रतिमाकर्म कारयेत् ॥
चतुरस्रायतां कृत्वा शिलां संस्थाप्य चार्चयेत् ।
शिरो मुखञ्च पृष्ठञ्च अङ्कयित्वा तु बुद्धिमान्" ॥ इति

शिलायां सूत्रधारणप्रकारमाश्रित्यैवमाह—

"मध्यसूत्रं समास्फाल्य तीक्ष्णशस्त्रेण चोत्किरेत्" ।

अङ्गुलीभिः प्रतिमाङ्गानां स्थानपरिमाणनिर्णयं प्राह तत्रैव—

"अभिप्रेतप्रमाणन्तु नवधा प्रविभाजयेत् ।
नवमे भास्करैर्भक्ते भागं स्वाङ्गुलमुच्यते" ॥
"द्व्यङ्गुलं गोलकं नाम्ना कलानेत्रं तदुच्यते ।
भागमेकं त्रिधा भक्त्वा पार्ष्णिभागं प्रकल्पयेत् ॥
भागमेकं तथा जानौ ग्रीवायां भागमेव च ।
मुकुटं तालमात्रं स्यात् तालमात्रं तथा मुखम् ॥
तालमात्रेण कण्ठन्तु तालेन हृदयं तथा ।
नाभिमेढ्रान्तरं तालं द्वितालावूरुकौ तथा" ॥
तालद्वयेन जङ्घा तु"

ततश्च तत्रैवाष्टादशपटले सूत्रधारणरीतिमाह—

"सूत्राणि शृणु साम्प्रतम् ।
कार्यं सूत्रद्वयं पादे जङ्घामध्ये तथापरम् ।
जानौ सूत्रद्वयं कार्यमूरुमध्ये तथापरम् ॥
मेढ्रे तथापरं कार्यं कट्यां सूत्रं तथापरम् ।
मेखलाबन्धसिद्ध्यर्थं नाभ्याञ्चैवापरा तथा ॥
हृदये च तथा कार्यं कण्ठे सूत्रद्वयं तथा ।
ललाटे चापरं कार्यं मस्तके च तथापरम्" ॥

इत्यादिरूपेण सूत्रधारणरीतिः प्रकटीकृता ।

ततश्च प्रतिमाङ्गानां विस्तारपरिमाणमाह तत्रैव—

"ललाटं नासिकावक्त्रं कर्तव्यं चतुरङ्गुलम् ।
ग्रीवाकर्णन्तु कर्तव्यमायामाच्चतुरङ्गुलम् ॥
द्व्यङ्गुले हनुके कार्ये विस्ताराच्चिबुकन्तथा ।
अष्टाङ्गुलं ललाटन्तु विस्तारेण प्रकीर्तितम् ॥
परेण द्व्यङ्गुलौ शङ्खौ कर्तव्यावलकान्वितौ ।
चतुरङ्गुलमाख्यातमन्तरं कर्णनेत्रयोः ॥
द्व्यङ्गुलौ पृथुकौ कर्णौ कर्णार्द्धाङ्गश्च पञ्चमे ।
भ्रूसमेन तु सूत्रेण कर्णश्रोत्रं प्रकीर्तितम्" ॥
विद्धं षडङ्गुलं कर्णं विद्धञ्च चतुरङ्गुलम् ।
चिबुकेन समं विद्धमविद्धं वा षडङ्गुलम् ॥
खड्गपात्रं तथा वर्तिं शष्कुलीं कल्पयेत्तथा ।
अङ्गुलेनाधरः कार्यस्तस्यार्द्धेनोत्तराधरम् ॥
अर्द्धाङ्गुलं तथा गोजी वक्त्रन्तु चतुरङ्गुलम् ।
आयामेन तु वै पुण्यात् ? सार्द्धमङ्गुलमुच्यते ॥

एवंविधैर्बहुभिः प्रमाणवाक्यैः सर्वासां प्रतिमानां लक्षणान्यत्र ग्रन्थे निरूपितानि ।

प्राचीने भारतवर्षे प्रतिमानिर्माणशैली महान्तमुत्कर्षं लभमाना आर्य-जातीनां महद्गौरवमवर्द्धयत् ।

विशेषतोऽस्मिन् वङ्गदेशे हयशीर्षपञ्चरात्रमतानुसारेणैव प्रतिमानिर्माण-पद्धतिः प्रचलितासीत् । प्रतिमानिर्माणमवलम्ब्य प्रतिमादीनां सूक्ष्माति-सूक्ष्मतया परिमाणकथनम् अन्यस्मिन् ग्रन्थे न दृश्यते ।

इत्येवं सर्वासां प्रतिमानामङ्गविस्तारस्य साधारणमानमुक्त्वा विशिष्य प्रतिमालक्षणं निरूपयति । तत्रादौ वासुदेवप्रतिमालक्षणमाह—

"वासुदेवन्तु कुर्वीत चतुर्बाहुं सुरेश्वरम् ।
दक्षिणोपरि चक्रन्तु पद्मञ्चाधः प्रकल्पयेत् ॥
वामोपरि गदा कार्या शङ्खञ्चाधः सुशोभनम् ।
एतल्लक्षणसंयुक्ता प्रतिमा सन्निधा भवेत् ॥
श्री-पुष्टी चापि कर्त्तव्ये पद्मवीणाकरान्विते ।
ऊरुमात्रोच्छ्रितायामे किञ्चिदावर्जिते तथा ॥
मालाविद्याधरौ कार्यौ प्रभामण्डलसंस्थितौ ।
प्रभां विभूषयेद् यत्नाद् गजव्यालादिभिर्बुधः ॥
पद्माभं पादपीठन्तु यथा शोभासमन्वितम् ।
देशदेशानुरूपेण कर्तव्यं देशिकोत्तमैः" ॥

मूर्तिलक्षणानां दिङ्मात्रमत्र प्रदर्शितम् । अन्यासां मूर्तीनां लक्षणानि प्रबन्धगौरवभिया नात्र प्रपञ्चितानि ।

एवमत्र ग्रन्थे विंशपटले श्रियः, एकविंशे वैनतेयस्य, द्वाविंशे केशवादिप्रतिमानां, त्रयोविंशे दशावतारप्रतिमानां, चतुर्विंशे नवव्यूहप्रतिमानां, पञ्चविंशे त्रैलोक्यमोहन-विश्वरूपादिप्रतिमानां, षड्विंशे ग्रहप्रतिमानां, सप्तविंशे स्त्रीदेवतामूर्तीनां, अष्टाविंशे अष्टलोकपालप्रतिमानां, ऊनत्रिंशपटले रुद्रप्रतिमानां, त्रिंशपटले गौरीप्रतिमायाः लक्षणानि विशिष्य निरूपितानि ।

# भक्तिभागवतस्योपसंहारः

( पूर्वानुवृत्तिः )

स्वर्लोकभोगरसिके पुरुषोत्तमेन्द्रे
तस्यात्मजः सुरतरुर्भुवि वीररुद्रः ।
भर्ताभवत् समुचितो धरणेर्नवीनः
सौन्दर्यसप्तदशवत्सरमत्स्यकेतुः ॥

× × × ×

तस्याभवद् गुरुरसौ कविराजराज-
श्रीमत्त्रिलोचननृपालगुरोस्तनूजः ।
श्रीजीवदेवकविडिण्डिमपण्डितेन्द्रो
रत्नावतीशिशुरनारतकृष्णभक्तः ॥

× × × ×

अङ्केऽस्य सप्तदशके नृपतेः स पञ्च-
त्रिंशाब्दचुम्बितवयाः कविडिण्डिमोऽयम् ।
गोदावरीपरिसरे निवसन्नकार्षीन्-
मासेन तत्र मकरेण महाप्रबन्धम् ॥

विज्ञस्य दूषणमपि स्पृहणीयमेव
कान्ताधरे पतिरदक्षतवद् विभाति ।
अत्यादरोऽतिकुटिलस्य खलस्य नेष्टो
व्यालस्य चुम्बनमिव प्रथमं भयानाम् ॥

एषा कृतिः सुकृतिभिर्मम शीलनीया
कृष्णस्य पादतुलसीदलशीतलेति ।

रत्नाकराः कति न सन्ति तथापि शर्वः
सर्वोत्तमे शिरसि विष्णुपदीं बिभर्ति ॥
तेभ्यो नमोऽस्तु भववारिधिजीर्णपङ्क-
संलग्नमोक्षणविचक्षणपादुकेभ्यः ।
कृष्णेतिवर्णयुगलश्रवणेन येषा-
मानन्दथुर्भवति नर्तितरोमवृक्षः ॥
एकः परं रचयितुं प्रहरात् प्रबन्ध-
मेकः परं षडपि खण्डयितुं मतानि ।
शक्तो मुकुन्दपदपङ्कजचिन्तनेन
श्रीजीवदेवकविडिण्डिम-पण्डितेन्द्रः ॥

इति श्रीमद्व्यवहर्तृमहापात्रकविराज-गजराजराजगुरु-श्रीमन्त्रिलोचन-देवाचार्यतनय-श्रीमद्व्यवहर्तृमहापात्र-कविडिण्डिम-गजराज-राजगुरुजीवदेवाचार्यविरचितं भक्तिभागवतं महाकाव्यम् । इति

---

# पितॄणां श्राद्धफलभोक्तृता

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीकुलमणिमिश्रशर्मा धर्मशास्त्राचार्यः ]

यथा मनिअर्डर्फर्माभिधेयं प्रमाणपत्रमासन्नकार्यालयाद् दूरतरं स्थानं रेलाख्यया व्यपदिश्यमानेन बृहद्बाष्पीययानेन जलयानेन वा याति, तथाऽत्र पुत्रादिभिः क्रियमाणस्य श्राद्धादेः कर्मणोऽपूर्वं सूरकरेण वैश्वानरतेजसा वा वसुप्रभृतीनधिगच्छति, ते च देवा यथायथं पितॄन् फलेन योजयन्ति ।

अनेन तु एकेनापि श्राद्धेन दाता, उद्देशभूमयः, अधिष्ठातारः, अपरे च देवाः संतुष्यन्ति । यथा कस्यचिन्नृपतेः सकाशात् "जज्"नाम्ना व्यप-

दिश्यमानः प्राड्विवाको गृह्यमाणया भृत्या तत्कर्तृतया च व्ययितेन धनेन क्षीरविक्रयी गोपाललालः, तेनापि चीवरक्रयार्थं गृहीतमूल्यस्तन्तुवायः, तन्तुवायसकाशादपि धान्यविक्रयेण प्राप्तमुद्रः साधुरपि तुष्यति।

तथात्रानुष्ठीयमानकर्मापूर्वं पितरं तद्योग्यभोगेन, फलदातॄंश्च देवान् तदभ्यवहार्यादिना योजयति। तेनैव कव्यवाहकाः सूर्यादयः, कव्यदातारश्च पुत्रादयोऽपि स्वदानजन्यधर्मेण हेतुना धनधान्यगोपुत्रादिभिस्तृप्यन्ति।

अपि चानेन निरयसंश्रया अपि पितरो नरकमवतीर्य दिवं विशन्ति। दृष्टान्तस्त्वत्र—यदि कोऽपि कोपी प्रभुः केनाप्यपराधेन कञ्चन वन्दीकरोति, तत्र यदि कश्चन वन्दीभूतात्मनीनः अभ्यवहार्यद्रव्यरूपेण व्यवहार्यवस्त्रादिरूपेणान्येन वा प्रकारान्तरेण उपढौकनेन तमेव जनबन्धनकृतं तर्पयति तर्हि वन्दीभूतं तूर्णं मोचयति बन्धनात्। अल्पमात्रया तृप्तश्चेत् प्रभुस्तदा सु-खाद्य-दानादौ दृष्टिं क्षिपति। तथात्र श्राद्धादिकर्मभूम्ना तृप्ताश्चेद् वसुप्रभृतयस्तर्हि पितरः पितृत्वं परित्यज्य देवत्वमधिगच्छन्ति, स्वल्पमात्रया तृप्ताश्चेत् सुस्थानेन सुखेन महता सौभाग्येन च योजयन्ति।

पितॄणां फलावापनविषये दृष्टान्तत्वेन प्रतिभातितरां पौराणमुपाख्यानम्।

पुरा स्यमन्तकमणेरन्वेषणार्थं पातालपुरीं प्रस्थितो भगवान् कृष्णचन्द्रः प्रबलपराक्रमेण जाम्बवता सममयुध्यत बहुकालपर्यन्तम्। तत्र च संगराजिरे कदाचिज् जाम्बवतोत्तानीकृतः प्रभुस्तदधिरूढोरःस्थल आसीत्। इत्यवसरे दिनेषु गच्छत्सु द्वारकापुरीवास्तव्याः सर्वे कृष्णो मृत इति बुद्ध्या विदधुः कृष्णस्य प्रेतकृत्यं पर्णनरदाहविधिना। प्रेतकृत्यविधौ यदा प्रद्युम्नेन इदमस्मत्पित्रे कृष्णचन्द्राय प्रेताय इति पूरकपिण्डं दत्तं तदाऽसौ भगवान् प्राप्तपिण्डो धृतसहस्रकेशरिविक्रमः प्रबलमपि परिपन्थिनमाजावजयत्।

अत एवात्र स्पष्टं प्रतीयते यत् पुत्रादिभिः प्रदत्तमवश्यं पितरः प्राप्नुवन्ति येन केनापि रूपेण यत्र क्वचनापि लोके वर्तमानास्तद्विग्रहानुरूपं भोगम्, तेषां च परिचालका देवा वसुप्रभृतयः प्रीताः सन्तः पितॄणां तात्कालिकावस्थापेक्षया उत्कृष्टतरपदं प्रापयन्ति। तथा च श्रूयते—

"उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असून् य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥"

अवरे एतल्लोकस्थाः, परासः उत्कृष्टलोकस्थाः, मध्यमाः मध्यलोकस्थाः, सोम्यासः सोमयज्ञसंपादिनः, ये असून् ईयुः अर्थात् वायुभूताः, ऋतज्ञाः सत्यज्ञाननिष्ठाः अवृका ज्ञानवन्तः, ते सर्वे पितर उदीरतां स्वावस्थानीभूतस्थानविशेषात् उत्कृष्टतरस्थानविशेषं गच्छन्तु ।

इत्यादिना श्राद्धफलेनापि पितॄणां पापक्षयपूर्वक-स्वर्गादिफललाभोऽवगम्यते । अन्यतरच्चात्र प्रमाणं शास्त्राणि । इयमत्र विवृतिर्यद् ये जैमिनिपराशरादयो महर्षयो धर्माचार्यास्तेऽपि ज्योतिषग्रन्थरचयितारः, यदि ज्योतिषग्रन्थोक्तं ग्रहनक्षत्रादीनां गमनागमनादिकं प्रत्यक्षीक्रियते ग्रन्थलेखानुसारं, कथमिवात्र तेषामेव तथ्यगिरां मुनीनां वचसि असत्यतारोपः क्रियते नास्तिकैः ।

बाल्ये वयसि पठिता वर्णमाला यथा वृद्धावस्थायामपि पठनसमये प्रत्याययति, तथात्र कर्मसमाप्तावप्यवशिष्यमाणोऽपूर्वाभिधेयसंस्कारविशेषोऽप्रत्यक्षविषयोऽपि फलेन नियोजयति श्राद्धकर्तारं, पितरं तदधिष्ठातारमपि देवसमूहमिति पर्यवसितमित्यलं भूम्ना । इति ।

प्रकृतिविलासकाव्ये

## काननकामनीयकम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—सा० भू० कृष्णमूर्तिशास्त्री ]

द्वारेषु मृत्युनगरस्य विदारितेषु
वक्त्रेष्वयत्नपतितान् विपिनद्विपानाम् ।
स्तोमान् यथेच्छमह ! जग्रसिरे क्षुधार्ता
भाग्योदयादजगराश्चलशैलकल्पाः ॥३१॥

यत्नेन कन्दफलमूलसमित्कुशादी-
न्याहृत्य नैजमुटजव्रजमाव्रजन्तः ।
उद्यम्य दण्डनिवहान् परिभर्त्स्य रिक्त-
हस्तीकृता मुनिसुताः पथि वानरेन्द्रैः ॥३२॥

स्वैरं विवृत्य फणिनः स्वफणाश्चरन्तो
गारुत्मतेन विरुतेन निकुञ्चिताङ्गाः ।
त्रासान्नितान्तमतिदुर्गमवेणुमूल-
वल्मीकसंहतिषु संन्यविशन्त सद्यः ॥३३॥

यावत् सरोवरमवातरदत्यगाधं
तावद् व्यकृष्यततरां विपिनद्विपेन्द्रः ।
ग्राहेण भीमवपुषाऽतितरस्विनाऽन्ते
कृच्छ्रादमुच्यत सुहृत्तरहस्तिसार्थैः ॥३४॥

तीक्ष्णैरयःखरतरैर्महिषा विषाणै-
र्वन्या निपानसलिलानि विलोडयन्तः ।
दुर्दर्शवक्त्रकुहरानुपकण्ठभाजो
नाजीगणन् बत मनागपि पुण्डरीकान् ॥३५॥

रोमन्थमभ्यसितुमारभतोपविष्टं
प्रच्छायपादपतले सुखमैणवृन्दम् ।

तेनारमन्त परिमृज्य तदङ्गकानि
स्वैरं कुमारनिकराश्च तपोधनानाम् ॥३६॥
लीना मरालमहिलाः कमलोदरेषु
शैलेन्द्रकन्दरवरेषु मयूरनार्यः ।
एणाङ्गनाश्च मुनिपर्णगृहोदरेषु
पुष्पेषु भृङ्गललनाश्च निदाघतप्ताः ॥३७॥
नोदेति नास्तमयते परमार्थतो यो
लोकान् सृजत्यवति संहरति प्रभावात् ।
द्रष्टा च यः सुकृतदुष्कृतयोः समेषां
मित्रः क्रमात्स भगवानजिहीत तापम् ॥३८॥
तस्मिन् क्षणे द्युमणिरैन्धतरां प्रतीच्या
संरक्तया कनककेतकदामदत्तम् ।
धृत्वेव काननमनोकहसंकुलं तत्
तन्वन् पिशङ्गमभितः प्रकरैः कराणाम् ॥३९॥
नीडोदरेषु तिमिरं निशि मा प्रसाङ्क्षी-
दित्याकलय्य निजचञ्चुपुटैः शकुन्ताः ।
कृत्वा च्छदैर्विरहितान् रजनीमुखान्ते
खद्योतकीटनिवहान् बत निक्षिपन्ति ॥४०॥
पाटीरमेदुरमहाद्रिपयोधराढ्यां
ज्योत्स्नांशुकां गिरिसरिद्रशनासनाथाम् ।
पुष्पोद्गमेन सुभगां विपिनान्तलक्ष्मीम्
अश्लिक्षदिन्दुरमृतप्रकिरैः करैः स्वैः ॥४१॥
कुञ्जेषु गुञ्जदलिभिः परिरञ्जितेषु
पुष्पोद्गतैः परिमलैर्निचुलीकृतेषु ।
संफुल्लमल्लिपरिकल्पिततल्पकेषु
भूपाः पुरन्ध्रिभिरकुर्वत मारकेलिम् ॥४२॥

स्वैरं करैः परिममर्श कृशोदरीणा-
　　मिन्दुर्घनानि जघनानि लतागृहेषु ।
पर्णान्तरेण सदनोदरमाविशद्भिः
　　पुष्पेषु केलिकलनैकविलोलुपानाम् ॥४३॥

कस्याश्चिदङ्कनिहितां मणिवल्लकीं स्व-
　　कण्ठस्वरानुसरणं परिवादयन्त्याम् ।
एणास्तृणेषु विमुखा निभृतोर्ध्वकर्ण-
　　माकर्णयञ्छशिकरैर्विशदे निकुञ्जे ॥४४॥

धुन्वत्यधिज्यमधिकं धनुरिक्षुधन्व-
　　न्याधून्वति त्रिविधगन्धवहे च लोध्रान् ।
धैर्यं विधौ धुवति धामभिरद्रिरन्ध्रे
　　धन्या वधूर्निधुवने धियमाबबन्ध ॥४५॥

वल्गत्पयोधरमनोहरहीरहारा
　　व्याकीर्णमूर्धजपरिच्युतपारिजाता ।
शश्वत्क्वणत्कनककिङ्किणिकाञ्चि काचित्
　　कुञ्जेऽन्वभून्मदनकेलिसुखं वराङ्गी ॥४६॥

वामभ्रु वश्चिबुकमग्रकरेण हारि
　　प्रेम्णोन्नमय्य रमणेऽनुनयत्यभीक्ष्णम् ।
कस्याश्चिदक्षिकमलप्रभवोऽपि राग-
　　श्चेतोम्बुजन्म समशिश्रियत क्रमेण ॥४७॥

कश्चित्प्रतप्ततपनीयसगोत्रगात्रां
　　वामेक्षणां मसृणवर्तुलपीवरोरुम् ।
आश्लिक्षदध्युपवनं वनकैरविण्यां
　　संस्पर्धमान इव वीक्ष्य विधुं प्रसक्तम् ॥४८॥

मानेन सार्धमुपगच्छति तत्र नीव्या
　　बन्धे क्रमाच्छिथिलतां कमितुः पुरस्तात् ।

कस्याश्चिदिन्दुरसितोत्पलयुग्ममेष
नेष्टे समुद्घटयितुं स्म करैर्निकुञ्जे ॥४९॥

जारैः किरातवनिताः सह रन्तुकामाः
श्रोणीभरेण च शनैः क्रमणेऽपि खिन्नाः ।
एकान्तमन्दिरधियाऽद्रिदरीर्विशन्ति
व्यद्रावयन्नदयमृक्षयुगाणि नक्तम् ॥५०॥

कान्तारपद्धतिषु कृत्रिमगर्तसत्त्व-
शङ्काकलङ्कितधियः करिणः प्रवृद्धाः ।
स्थाणून् मुहुः करधृतान् भुवि निक्षिपन्तो
नक्तं चरन्ति कलभैरनुगम्यमानाः ॥५१॥

पाटीरकोटरविनिर्गतभोगिरत्न-
ज्वालावलीकवलितासु वनस्थलीषु ।
निश्चक्रमुर्न चकिता दिवसभ्रमेण
मूकाश्च घूकनिकराः क्षुधिताः क्षपायाम् ॥५२॥

यावत्क्षुधा गजरिपुः समगर्जदुर्व्वी-
र्भूमौ निवेश्य वदनं समुदग्रदंष्ट्रम् ।
तावद्भिया कतिपये हरिणा विशीर्णाः
पञ्चास्यपार्श्वमुपगम्य झटित्यनश्यन् ॥५३॥

ग्राव्णां च दुर्गभुवि संविशतां हरीणां
सावर्ण्यतो बत भिदाग्रहमन्तरेण ।
सुस्निग्धवर्ष्म परितश्चरदेणवृन्दं
दुष्टात्मनां कवलतामचिरादयासीद् ॥५४॥

स्वस्यैव चेष्टितवशात् पिहितात्मवक्त्रः
स्निग्धीकृतैर्व्रततिपर्णचयैर्बतान्धः ।
व्याघ्रो रुदंश्च परितः कलभाधिरूढैः
कुन्तैरघानि मृगयारसिकैः किरातैः ॥५५॥

पुच्छेन भूमिमभिहत्य रुषा विदार्य
　　वक्त्रं प्रभातरलमक्षियुगं प्रसार्य ।
द्वीपी निपत्य बत मृत्युरिव क्षणेन
　　कण्ठेऽग्रहीद्धरिणकं क्षुधितः क्षपायाम् ॥५६॥
वृत्यावृतव्रजनिरुद्धमजार्भकाणां
　　स्तोमं प्रविश्य निभृतं विदिताभ्युपायः ।
रात्रावचूचुरदरण्यनिवासिनोऽपि
　　संवञ्च्य बुद्धिविभवेन शृगालवर्गः ॥५७॥
उत्प्लुत्य शश्वदभितो मसृणाङ्कानाम्
　　आक्रीडतां समुदयः शशशावकानाम् ।
श्रुत्वा वृकौघविरुतं निभृतोर्ध्वकर्णं
　　तूर्णं व्यलीयत लतासदनोदरेषु ॥५८॥
अप्सु प्रतप्तरजतद्रवसन्निभासु
　　संफुल्ल-नील-कमलावलिकोमलासु ।
मन्दानिलाकुलतरङ्गपरंपरासु
　　वाप्या व्यहार्षुरसकृद्रमणैः करिण्यः ॥५९॥
मन्दानिलाकुलितवल्लिनिकुञ्जपुञ्ज-
　　गुञ्जन्मनोज्ञमधुपव्रजमञ्जुलेयम् ।
एणार्भकैस्तत इतः कुतुकाद्व्रजद्भिः
　　कं रञ्जयेत्सहृदयं न वनोदरश्रीः ॥६०॥
विद्वन्मनोहरतरं ललिताभिधानं
　　सद्वृत्तरत्नमचिरन्तनभावगर्भम् ।
आचन्द्रतारकमरण्यविहारि दुर्गे !
　　स्तात् कामनीयकमिदं भुवि काननस्य ॥६१॥

# काव्यशास्त्रस्य कीदृशी शिक्षोपयुक्ता

[ निबन्धकः—श्रीसरोजेन्द्रनाथ-भञ्ज-काव्यतीर्थः बि. ए., ]

भक्तानामवगाहनाय सततं या स्नेह-निस्यन्दिनी
या देवी परमा क्षितौ प्रतिदिनं पुण्याय यद्दर्शनम् ।
घोरावर्ततमोरुजापनयने या प्रार्थितोपस्थितिः
कल्याणं दिशतात् सदा सुरुचिरा मातेव सा भारती ॥

काव्यशास्त्रस्य साम्प्रतं कीदृशी शिक्षा उपयुक्ता इति विचारे कर्तव्ये इदमेव प्रथमं समुदेति सुधियां मनसि यत् अपि नाम काव्यं शास्त्रशब्द-वाच्यम् उत अन्यथा वा। शिष्यते अनेन इति शास्त्रम्। एवञ्च न हि वेदादीनामिव काव्यानां शास्त्रत्वम् एतेन कस्यचित् शासनादर्शनात् इति पूर्वपक्षे एवमुत्तरयामः। यथा हि वेदादिशास्त्रेषु प्रवृत्तिनिवृत्तिमूलोपदेशा दृश्यन्ते एवं काव्येष्वपि। काव्यं हि रामादिवत् प्रवर्तितव्यम् न रावणादि-वत् इति प्रवृत्तिनिवृत्त्युपदेशपरम्। शास्त्रन्तावत् त्रिविधं प्रभुसम्मितं, सुहृत्सम्मितं, कान्तासम्मितञ्चेति। तत्र काव्योपदेशस्य कान्तासम्मिततया प्रभुसम्मितवेदादिशास्त्राणाम् उपदेशेभ्यो रुचिरतरत्वमुपादेयत्वञ्चास्त्येव। एवञ्च काव्यस्य शास्त्रत्वमङ्गीकार्यम् एव। "पदवाक्यप्रमाणेषु तदेतत् प्रति-बिम्बितम्। यो योजयति साहित्ये तस्य वाणी प्रसीदति" इत्यभिधा-वृत्तिकारिकाव्याख्यानावसरे उक्तं मुकुलभट्टैः—"व्याकरणमीमांसातर्क-साहित्यात्मकेषु चतुर्षु शास्त्रेषु उपयोगात्" इति। शास्त्रनिरूपणे राज-शेखरेणाप्युक्तम्—"पञ्चमी साहित्यविद्येति यायावरीयः, सा हि चतसृणामपि विद्यानां निष्यन्दः" इति।

"काव्यालापांश्च वर्जयेत्" इति स्मृतिशास्त्रवचनं तु असत्काव्यविषय-मेव। यत्तु काव्यं बहुभिरेव पूर्वाचार्यैर्न शास्त्रशब्देन व्यवहृतम् तत्र विलक्षण-

मिदं काव्यशास्त्रम् अपरशास्त्रेभ्य इति मनसिकृत्यैवेति मन्यामहे। अर्थस्य द्वैविध्यं स्वीकुर्वता उद्भटेनोक्तम् "किन्तु द्विरूप एवासौ विचारित-सुस्थोऽविचारित-रमणीयः। तयोः पूर्वमाश्रितानि शास्त्राणि तदुत्तरं काव्यानीति"। वस्तुतस्तु काव्यशास्त्रमिदम् अपरशास्त्रविलक्षणमासीन्। किं तावत् काव्यविद्या इति मतविकल्पे स्पष्टमुक्तम् राजशेखरेण—"नामधातु-पारायणे, अभिधानकोशः, छन्दोविचितिः, अलङ्कार-तन्त्रं च काव्यविद्याः।" इति। तत्र नामधातुपारायणे इति व्याकरणम्। अधुना हि साहित्यशास्त्रस्य यादृशी शिक्षा वरीवर्ति तत्र व्याकरणशास्त्रस्य सम्यगध्ययनं न दृश्यते। व्याकरणस्य साधारणज्ञानं साहित्याध्येतॄणां स्वल्पमेवोपकुरुते। व्याकरणं हि सम्यक् पदज्ञानम्; सति च तादृशे ज्ञाने नवीनपदनिर्माणे प्रवृत्तिर्व्युत्-पत्तिश्च जायेते अन्यथा अपरनिर्मितं शब्दजातमेव सम्बलं भवति, क्रमाच्च अपरविधेया स्वचिन्ता। यच्च व्याकरणं नाम महान् भाषासहाय इति तद् निर्विवादमेतत्। इदं हि व्याकरणाध्ययनं प्रथमतया अवर्जनीयाङ्गतया चासकृदुपदिष्टं साहित्यशास्त्रधुरन्धरैः। आह च सूरिवर्यो भामहः—

"विद्यानां सततमपाश्रयोऽपरासां
तासूक्तान्न च विरुणद्धि कांश्चिदर्थान्।
श्रद्धेयं जगति मतं हि पाणिनीयं
माध्यस्थ्याद् भवति न कस्यचित् प्रमाणम्॥" इति।

आलङ्कारिकशेखर आनन्दवर्द्धनोऽप्याह "प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्" इति। किञ्च "एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातः स्वर्गे लोके च कामधुग् भवति" इत्यप्याम्नातम्। अत एव हि च्युतसंस्कृतिर्महादोषत्वेन गण्यते। अस्य च दोषस्य असाधुत्व-मिति नामान्तरम्। युक्तमुक्तमाग्नेये "शब्दशास्त्रविरुद्धं तदसाधुत्वं विदुर्बुधाः" इति।

एवञ्च साहित्यशास्त्रे व्याकरणस्य विस्तरशः शिक्षा इदानीमावश्यकी।

साहित्यशिक्षायाम् अपरमपि किञ्चित् चिन्त्यम्। कविशेखरो राज-

शेखर एवमस्मान् भणति—"राजा कविः कविसमाजं विदधीत। राजनि कवौ सर्वो लोकः कविः स्यात्। स काव्यपरीक्षायै सभां कारयेत्...... तत्र यथासुखमासीनः काव्यगोष्ठीं प्रवर्तयेद् भावयेत् परीक्षेत च......तत्र परीक्षोत्तीर्णानां ब्रह्मरथयानं पट्टबन्धश्च। श्रूयते चोज्जयिन्यां काव्य-परीक्षा—

"इह कालिदास-मेण्ठावत्रामररूपसूरभारवयः।
हरिचन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम्॥"

इति। इदानीन्तनसमये यद्यपि तादृशी साहित्य-सभा परीक्षा च असम्भवप्राया तथापि राजशेखरोक्तेः सारमस्माभिर्ग्राह्यम्। अधुना सर्वत्रैव काचित् समितिर्दृश्यते। मन्ये, समितिनिर्माणं कलियुगधर्मः। एवमपि यदि काचित् साहित्यगोष्ठी क्रियते तदा साहित्यचर्चा सुगमा भवेत्। इयं तावत् साहित्यगोष्ठी कापि आधुनिकविलक्षणा भवेत्। तद्यथा—अस्यां साहित्य-सभायां विचाराः प्रवर्तयितव्याः समस्यापूरणादिकञ्च कार-यितव्यम्। काव्येषु याः खलु प्रहेलिका दृश्यन्ते नूनं ताः सर्वा अपि प्राचीनसाहित्यचर्चारीतिं गूढं कथयन्ति, ताश्चात्र प्रवर्तयितव्याः। एवं तर्हि साहित्यगोष्ठी काव्यनिर्माणे वाग्मितायां च महत् साहायकं वितरेत्।

एवंरूपा साहित्यगोष्ठी प्राचीनकालेषु विलसन्ति स्मेत्यपि नाप्रमाणम्। तथा च कादम्बर्याम् "कदाचिदक्षरच्युतक-मात्राच्युतक-बिन्दुमती-गूढ-चतुर्थपाद-प्रहेलिकाप्रदानादिभि"रिति। भोज-प्रबन्धे समस्याविनोदप्रबन्धः। श्लेषनिपुणस्य सुबन्धोरेवमाक्षेपोक्तिर्दृश्यते—

"सा रसवत्ता विहता, नवका विलसन्ति, चरति नो कं कः।
सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये॥"

"प्रयच्छति चमत्कृतिं विरचनाविधौ चेतसः
सभासु पठितो भवत्यसमसाधुवादाप्तये।
प्रथामुपगतस्तनोत्यतितरामुदारं यशो
न पुष्यति मनोरथं कमिव काव्यचिन्तामणिः॥"

इत्यपि सुभाषिते। किञ्च साहित्याध्येतारो यत् छन्दःशास्त्रमपि न सम्यगधिगच्छन्ति तत्रापि साहित्यगोष्ठीनामत्यन्ताभाव एव कारणम्। छन्दो हि केवलं ग्रन्थपाठेनैव नाधिक्रियते। अस्य पुनः पुनरनुशीलनं विना धारणं दुःशकं भवति। श्लोकपादपूरणं श्लोकैरेव प्रत्युत्तरदानम् इत्यादिरीतयोऽस्याधिगमे हेतवः। एवञ्च कोशाध्ययनमपि आनुषङ्गिकं फलं भवेत्। तनुवाग्विभवत्वं कदाचिदपि न यशसे। एवं तर्हि साहित्य-शास्त्रस्य मौखिकपरीक्षा कापि अवश्यमभ्युपेया इति सुस्थितमेव। परन्तु साहित्यशास्त्रे अलङ्कारतन्त्रस्यापि नवीना शिक्षा-पद्धतिरुपयुक्ता।

आलङ्कारिकाणां वैयाकरणमतानुवर्तित्वं प्रागुक्तम्। "चतुष्टयी शब्दानां प्रवृत्तिः" इति वैयाकरणमतानुसार्येव आलङ्कारिकाणां मतम्। किञ्च ध्वनि-स्थापने वाक्य-स्फोटं स्वीकुर्वता आनन्दवर्द्धनाचार्येण स्वस्य वैयाकरण-मतानुविधेयत्वं प्रकटीकृतम्। अस्य च अलङ्कारशास्त्रस्य वैयाकरणानां शब्दखण्ड-विचार-सहकृता एव शिक्षा उपयुक्ता। विद्वद्भिर्बहु गवेषितोऽपि अलङ्कारतन्त्रे अयं पन्था नाद्यापि सम्यक् क्षुण्णः। तत्र साहित्या-ध्येतृभिः सावहितैर्भवितव्यम्।

पुरा साहित्यशास्त्रमिदं न सुगममासीत्। अधुना हि छात्राः केवलं महाकविसम्बन्धिनो ग्रन्थान् पठन्ति साहित्यशास्त्रस्य सर्वाङ्गीणां शिक्षां लब्धुं न यतन्ते। अत एवेदानीं साहित्यशास्त्रमिदं किञ्चिद् उपेक्ष्यं लघु वस्तु सञ्जातम्। वस्तुतस्तु साहित्यमेव सर्वशास्त्राणां सारम्। अत एव शास्त्रपूर्विका साहित्यविद्या। सम्यगाह यायावरीयः—"इह हि वाङ्मयम् उभयथा शास्त्रं काव्यं च। शास्त्रपूर्वकत्वात् काव्यानाम्। पूर्वं शास्त्रेष्वभिनिविशेत। नह्यप्रवर्तितप्रदीपास्ते तत्त्वार्थसार्थमध्यक्षयन्ति।" इति।

उपसंहारे इदमेव वक्ष्यामः। येयं संस्कृतभाषा व्यास-वाल्मीक्यादिभि-र्दत्तजीविता कालिदासस्य मानसराजहंसी भवभूतेर्वश्यानुवर्तिनी, वाणस्य रसनाग्रनर्तकी एकदा दिगन्तानुद्भासयामास सेयमिदानीं मलिनेव दीनेव

कथमवसीदति। किमद्यापि न कश्चिद् व्याहरति "पुराणमित्येव न साधु सर्वम्" इति। कथम् एतावतापि कालेन न कोऽपि जातो भवभूतेः समानधर्मा। मृतेयं संस्कृत-भाषा इत्यपि न वक्तुं शक्यम्। सा निगडिता इत्युच्यतामित्याह कश्चित् पाश्चात्य-सूरिः। साहित्याध्येतार एव भाषायाः पोत-स्वरूपाः। त एव भाषां विनेतुं शक्नुवन्ति। तेषामेव यत्नेन पुनः पुनरनुशीलनेन चेयं संस्कृत-भाषा अवश्य रुचिरतरा स्यात् इति मे मतिः। तथा सति "साहित्यशास्त्रस्य साम्प्रतं कीदृशी शिक्षा उपयुक्ता" इति प्रश्नोऽपि न समुद्भवेत्। आह च दण्डी—

"न विद्यते यद्यपि पूर्ववासना-
गुणानुबन्धि प्रतिभानवत्त्वम्।
श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम्॥ इति शम्।

# सन्ध्या-वर्णनम्

[ निबन्धकः—श्रीदुर्गादास गोस्वामी ]

अथ गैरिकरागरञ्जिते वरुणाशादयिताञ्चलेऽचिरात् ।
नवफुल्लकुमुद्वतीरजःसुरभिः सर्पति शीतलानिलः ॥१॥
करुणं रुदतीव पद्मिनी पिहितान्तर्मधुपध्वनिच्छलात् ।
सवितुः करवञ्चिता शनैरभिमानादिव मुद्रितेक्षणा ॥२॥
अचिरागतविप्रयोगजां विमृशन्तौ गुरुवेदनां मुहुः ।
सरितं नयनाम्बुशीकरैः सृजतः सम्प्रति कोकदम्पती ॥३॥
विहगाः स्वकुलायमास्थिताः स्तिमितान्तःकलकाकलीध्वनिम् ।
विरतालसपक्षधूननाः सुखनिद्रामचिरादुपागताः ॥४॥
शुभदीपकरा विमोहिनी श्लथगम्भीरपदेव सुन्दरी ।
अयते तिमिरावगुण्ठिता भुवि सन्ध्या जडितेक्षणा शनैः ॥५॥
अधुना भवनोत्थकुण्डलीकृतधूपागुरुधूमराजिभिः ।
अपि गोष्ठनिवृत्तगोखुरोद्धतपांशुप्रचयैस्ततं नभः ॥६॥
ऋषिभिर्नियतं विभावसौ हुतसर्पिःशुचिगन्धमन्थरः ।
सुरसद्मसु वाद्यमङ्गलध्वनिमाशासु तनोति मारुतः ॥७॥
अशिवैः परितः शिवारुतैरपि झिल्लीध्वनिभिर्मदावहैः ।
मुखराः ककुभश्चकासति स्फुटखद्योतविलासविह्वलाः ॥८॥
लपतां खलु वीणया मुहुः कलसङ्गीतचयस्य योगिनाम् ।
सह मूर्च्छनया प्रलीयते तनुरेखा दिवि काननश्रियः ॥९॥
हिमचन्द्रिकयाऽभिनन्दयन् रवितापाहतकान्तिमोषधीम् ।
दरकम्पितवेणुकाननादुदितः खे सहसा कलानिधिः ॥१०॥

---

# ग्रन्थनिकषः

नव्यस्मृति-प्रश्नोत्तर-विवेकः—

खुलनाजिलाधीन-सांदियाग्रामवास्तव्यस्तत्रभवान् विद्वद्वरः श्रीआशुतोष-काव्य-व्याकरण-स्मृतितीर्थमहोदयः स्मृति-प्रथमपरीक्षापाठ्यभूतेषु तिथ्युद्वाह-प्रायश्चित्ततत्त्वेषु सम्भावितानामष्टषष्ठ्यधिकशतप्रश्नानामुत्तरवाक्यात्मकं कमप्यभिनवं नव्यस्मृतिप्रश्नोत्तरविवेकाख्यं ग्रन्थं विरचितवान्। विगत-वर्षत्रयपरिगृहीतस्मृतिप्रथमपरीक्षाप्रश्नोत्तरसमावेशेनासौ ग्रन्थः सम्पूर्णतां प्राप्तः। पञ्चचत्वारिंशद्वर्षाणि यावत् स्मृतिप्रधानां शब्दसाहित्यमीमांसादि-विषयामध्यापनां बहुतरविद्यार्थिनामाहारव्ययभारवहनपूर्वकं सम्पादयन्नयं ग्रन्थकृद् वङ्गीयपण्डितकुले ख्यातिमतुलां लेभे। धीरवरस्यास्याति-प्रचुराणां सुरुचिराणां स्मृतिशास्त्राध्ययनबोधाचरणप्रचारणानां चरम-फलभूतोऽयं ग्रन्थो न केवलं विद्यार्थिनां परमध्यापकानामपि महोपकाराय भविष्यतीत्यत्र नास्ति सन्देहलेशः। स्मृतिप्रथमपरीक्षार्थिभिर्न केवलमेतद्-ग्रन्थतो यावत्प्रष्टव्यप्रश्ना एव विज्ञेया अपि तु विनैवाकरग्रन्थाध्ययनं निखिलविज्ञेयार्थाः सम्यगवगन्तुं शक्याः। विद्यार्थिहिताय रचितस्यास्याति-प्रचुरप्रचारः सर्वथा काम्य एवास्माकम्। प्रकाशकश्चास्य पुस्तकस्य श्रीशिवेन्द्र-नाथ-काव्यस्मृतिरत्नमहोदयः। मूल्यमस्याणकाष्टकम्। पत्रतदक्षरादिकञ्चातिरमणीयम्। प्राप्तिस्थानन्तु—पि. सि. चक्रवर्त्ती एण्ड ब्रादार्स, ७४, वेचु च्याटार्ज्जी ष्ट्रीट्, कलिकाता।

परीक्षकः—

काव्य-व्याकरण-पुराण-षड्दर्शन-सांख्य-वेदान्त-

तर्कतीर्थ-तर्काचार्याद्युपनामकः

श्रीउपेन्द्रचन्द्र-देवशर्मा।

# सत्यानुभावम्*

## प्रथमः सर्गः

वैकुण्ठसद्मनि समुज्ज्वलरत्नमञ्चे
पद्मालयाकरसरोजनिषण्णपादः।
नारायणः करतलोन्नमितोत्तमाङ्गः
प्रोवाच चारुवचनानि मृदुस्मितेन ॥१॥
कान्ते कलिः कलयति प्रबलप्रभावं
पुण्याः क्रिया जगति सम्प्रति नामशेषाः।
पापस्य वश्यमिव विश्वमिदं प्रपद्ये
सद्यः समुद्यतमहो तिमिरं समृद्धम् ॥२॥
सत्कर्म नो दधति साधुकुलप्रसूता
भूतानि भव्यपदवीमभितस्त्यजन्ति।
हिंसादिदोषविनिवर्तितसत्त्यवृत्ता
हा हन्त शान्तिसरणिं प्रविलापयन्ति ॥३॥
स्वार्थं समर्थयितुमर्थिपदे समर्था,
नाप्यर्थिनां भवति कामनयाऽर्थपूर्तिः।
सन्देहमन्दहृदया जनता जगत्यां
विश्वासलेशमपि न क्वचन प्रयाति ॥४॥
निःशङ्कमेव च कपर्दकलाभहेतोः
शक्नोति हन्तुमपि जीवशतं मनुष्यः।
गेहागताय बत भिक्षुजनाय सायं
नो भक्ष्यदानविधये विदधाति कामम् ॥५॥
मार्गं गतो नयनहीनजनः कदाचिद्
गन्तव्यमार्गमनुयुज्य जराविशीर्णः।

---

* श्रीसत्यनारायणवृत्ताश्रयं महाकाव्यम्।

लोकेन कौतुकपरेण हृतादरेण
सन्दिश्य मार्गमपरं क्रियते हताशः ॥६॥
वाणिज्यकर्मणि बहुच्छलता प्रजाता
विक्रेतुरस्ति शठता परिमाणकाले ।
क्रेतुश्चकास्ति वचनादिमिषेण तद्वद्
द्रव्यार्घदानविधिवैमुखमेव नित्यम् ॥७॥
हव्यादिकेषु भुजगादिवसाप्रसेकाद्
भव्यप्रियेषु नितरामपवित्रताऽभूत् ।
तैरद्य यज्ञविधयो न भवन्ति सिद्धाः
क्रुद्धा भवन्ति तत एव सुराः समृद्धाः ॥८॥
दुग्धेषु मुग्धजनतापरिवञ्चनार्थं
नीरं प्रभूतमधुना भुवि मिश्रयन्ति ।
गोपाः परार्थविमुखाः परलोकमूढाः
कस्मात्ततो भवतु पुण्यविशेषयोगः ॥९॥
यज्ञेषु विज्ञहृदयान्यपि नो रमन्ते,
देवा न तृप्तिमुपयान्ति हुतोपयोगात् ।
तस्मादमी न नियमात् सलिलादिदानैः
शस्यादिसम्पदि भजन्त्यनुकूलभावम् ॥१०॥
क्षेत्रेषु बीजमुचितं विनिकीर्य लोकाः
श्रान्तिं वृथैव रचयन्ति समग्रकालम् ।
कुत्रापि भूरिसलिलैः क्षयमेति शस्यं
कुत्रापि तत् सलिलहीनतया विशुष्कम् ॥११॥
सूरप्रतापवशतः क्वचन प्रदेशे
शुष्के जले जनगणो म्रियते तृषार्तः ।
तत्रैव हन्त समये प्रचुराम्बुयोगाद्
गोमानुषादिबहुजीवविनाशदोषः ॥१२॥

यस्मिन् कदाचन जनाः पवनातिदैन्या-
न्निश्वाससंग्रहविधावपि शक्तिशून्याः ।
तत्रैव कालनियमेन विशालवेगो
वातो विनाशयति संसृतिसन्निवेशम् ॥१३॥
स्रोतोमुखे पतितमात्मजमात्मजां वा
शोचन्तमन्तरितधैर्यबलं स्वबन्धुम् ।
संवीक्ष्य तत्र करुणातरलीकृतात्मा
को वा न वेत्ति हृदये विषमं विषादम् ॥१४॥
गेहे सदागतिहृते विकृते जलाद्यैः-
र्यातान् महीरुहतले वसतिं विशीर्णान् ।
पर्याकुलान् निजजनैः परितः समेतान्
दृष्ट्वाऽतिकष्टमुपगच्छति राक्षसोऽपि ॥१५॥
दुर्भिक्षराक्षसमसीमविशालकुक्षिं
सन्तर्पयन्ति कति जीवनभक्ष्यदानैः ।
आकालिकं मरणमद्यतनं जनानां
दौर्भाग्यमेव भुवि सूचयति प्रभूतम् ॥१६॥
नास्ते तथा तरुषु भूरिफलप्रसूति-
र्नो वा ततः सुरसता रसनासुखार्था ।
पुष्पेषु सौरभभरो न पुरेव भाति
क्षुद्राकृतिं तरुलताप्रसवाः श्रयन्ते ॥१७॥
जम्बूरसेन समसावि यतः पृथिव्यां
जाम्बूनदः सुविपुलो विलसत्सुवर्णः ।
तत्राद्य पादपफलं शुकतुण्डकुक्षौ
पर्याप्तमेव निहितं किमतः परं स्यात् ॥१८॥
वृक्षोपजातफलसम्पदमाप्नुवन्तः
पूर्वं समं खगगणैः सुखिनो गृहस्थाः ।

किन्त्वद्य पक्षिनिवहोऽपि तया न तृप्तो
दूरे कथा गृहपतेः परितृप्ततायाः ॥१९॥
आदौ युगे मुनिगणाः फलमूलभक्ष्या
निर्विघ्नमेव सशमाः समयाननैषुः ।
वृक्षाजिनेन परिवार्य निजं शरीरं
लज्जानिवारणममी व्यदधुस्तदानीम् ॥२०॥
किन्त्वद्य सन्ततविलासगृहीतचित्ता
वित्तोद्धता विविध-वाधित-कृत्यमत्ताः ।
बह्वर्थसाध्यविधिसाधनमात्मतृप्त्यै
सम्पादयन्ति सुतरां परलोकमूढाः ॥२१॥
शास्त्रे विगीतविधिसाधनतत्पराणां
रोगादयो बहुविधाः प्रचिता भवन्ति ।
तेषां निरासमपि कर्तुमशक्नुवन्तः
सन्तो विषादविवशा वृजिने पतन्ति ॥२२॥
विस्मृत्य वेदवचनानि विमूढभावा
विप्रादयो विदधति प्रणयं कुकृत्ये ।
देवद्विजातिगुरुभक्तिरभूद् विलुप्ता
वेदोदितो विधिरवाधि विलासकृत्या ॥२३॥
यत्र प्रजा दिवसकर्म समग्रमेव
प्रावर्तयन्त विधिशास्त्रकथानुरूपम् ।
तत्राद्य कामसदृशं विषयं चरन्त्यो
निर्बाधमेव जनतामपि पातयन्ति ॥२४॥
ज्ञात्वापि दीप्तिविषमं दहनं पतङ्गा-
स्तत्रोत्पतन्ति भयलेशमपि त्यजन्तः ।
आन्ध्यं व्यधायि दुरितेन जगत्प्रपञ्चे
नास्ते विवेकविमला मतिरेव तस्मात् ॥२५॥

देवोत्सवेषु हृदयं न तथाऽनुरक्तं
तौर्यत्रिकं न च दिशो मुखरीकरोति ।
सङ्गीतनृत्यकुशलासु सुतोत्सवादौ
वाराङ्गनासु नितरामजनि प्रसादः ॥२६॥

सन्ध्यादिवन्दनकृते नहि मन्दसन्धा
मन्दा मुहूर्तमपि हर्त्तुममी सकामाः ।
कामोपचारपरिवार-विधेर्विधाने
मोहेन हा बत युगान्यपि यापयन्ति ॥२७॥

प्रत्यक्षदेवसदृशौ पितरौ पृथिव्यां
लोको न मानयति भूरितरप्रमोहात् ।
भार्यामनोरथफलानि विधातुमद्धा
श्रद्धापरो बहुषु कर्मसु मार्मिकोऽसौ ॥२८॥

रात्रावपत्रपमनिष्टवचःप्रचारं
मिथ्यापि नित्यमपरान्वयजा विधाय ।
भ्रात्रा समं घटयते बत वैरभावं
यस्मात् परस्परकथास्मरणेऽपि कोपः ॥२९॥

दूरं गता गृहपतेरिह पञ्च यज्ञा
न स्मर्यते विधिपदं शुभदं समाजे ।
वेदस्मृतीरितसदाचरणं विशीर्णं
वर्णप्रथाऽर्णवगतेव तरी विपन्ना ॥३०॥

एकस्य वित्तमपरः कपटेन हृत्वा
स्रक्चन्दनादिविषयेषु परत्वमत्या ।
प्रत्यूहकूटमवधूय बिभर्त्ति भोगं
व्यामोहमुग्धमनसां क इव प्रबोधः ॥३१॥

धर्माधिकारनियमाद् बहिरापतन्तः
सन्तोऽपि कालविकृताः परिभूयमानाः

राज्ञामधर्मचयसञ्चयमावहन्ति
के वा न कालनियमस्य भवन्ति वश्याः ॥३२॥
कालेन सूरकिरणाः प्रलयं प्रयान्ति
कालेन रात्रिरपि याति सुदूरमस्तम् ।
कालेन तापक-तपर्त्तुसमृद्धिलोपाद्
वर्षागमो भवति लोकहिताय बाढम् ॥३३॥
ग्रीष्मात् परं जलदकालगतीरदृष्ट्वा
भूमौ न शारदरुचिः प्रचरत्यकाले ।
बाल्यात् परं तरुणतामपहाय मुग्धां
गृह्णाति कः परिणतिं वयसः शरीरी ॥३४॥
स्वाध्यायसिद्धमनसां सविधे गुरूणां
यद् ब्रह्मचर्यपरिपालनमास्त पूर्वम् ।
तद्व्यस्तमस्तनियमानुगमं जनानां
विद्याग्रहो ग्रहविकारवशाद् विलुप्तः ॥३५॥
उद्दालकप्रभृतिशिष्यगणस्वभावम्
आचार्यकेषु नहि शिष्यगणाः श्रयन्ते ।
शुश्रूषणा तु बहुदूरमिता गुरूणां
कुर्वन्ति वञ्चनममी नियतं हि तेषाम् ॥३६॥
नो विश्वसन्ति गुरुसद्वचनप्रपञ्चे
मञ्चस्थिता गुरुमधःस्थितमातुदन्ति ।
विज्ञाय तत्त्वमणुमात्रमतीव दृप्ता-
स्तृप्ता भवन्ति नहि शुद्धिमुपैति विद्या ॥३७॥
मिथ्यापि लोकवलये भवताद् यशो मे
लोका विदन्तु मम सिद्धिकथां मृषापि ।
इत्येव सम्प्रतितनेषु मतिः प्रवृत्ता
सत्ये न कस्यचन चित्तमशङ्कवृत्तम् ॥३८॥

आचार्यपादरजसो ग्रहणेन मूढा
आचार्यमेव चरितार्थमनुस्मरन्ति ।
आदेशलेशपरिपालनमप्यकाले
सम्पद्यते गुरुतया गुरुदक्षिणावत् ॥३९॥

गुर्वङ्गनासु नवनर्मवचोविभङ्ग्या
सम्भाषणादि वितनोति जनोऽभिमानी ।
जानन्नपि प्रसभमात्मकृतापराधं
वाधं कथञ्चन न साधयितुं स ईष्टे ॥४०॥

शास्त्रे विदन्ति च यथा विषयान् विधेयान्
द्वेषं ततो विरचयन्ति परत्र रागम् ।
नानाविधागमसमागमविह्वलत्वाद्
आपातदर्शिन इमे वृजिने पतन्ति ॥४१॥

उन्माददोषविषमा इव शिष्यसङ्घा
व्याघातयन्ति गुरुसङ्घि महत्त्वलिङ्गम् ।
दूरेऽस्तु सम्प्रति कथा गुरुदक्षिणाया
व्याजेन यन्ति गुरुतो बत दक्षिणां ते ॥४२॥

प्राणैः पणैश्चिरपरिश्रमशोधनार्थं
संज्ञां गुरोः कथमपि ज्ञपयन्ति विज्ञाः ।
केचित् प्रशस्तिरसिका गुरुनामचर्चां
हित्वा निजप्रतिभया प्रवदन्ति विद्याम् ॥४३॥

इत्थं गुरुष्वपि गते विपुलप्रमादे
व्यस्तोऽभवत् सुमधुरो गुरुशिष्यभावः ।
नो शिक्षयन्ति गुरवः सुगभीरमर्थं
न्यस्ताग्रहा न खलु तत्त्वपदं स्मरन्ति ॥४४॥

स्रक्चन्दनादिविषयानिह विस्मरन्तः
प्राञ्चो विलासमणुमात्रमपि व्यमुञ्चन् ।

भोगाभिलाषविषमाधुनिकप्रपञ्चे
धीरास्तु दारसुतभूषणदानधन्याः ॥४५॥
गेहाङ्गना हरितगोमयपुण्यलेपैः
प्रातस्तरां न भवनान्यधिवासयन्ति ।
नो वा सुगन्धभृतचन्दनचारुनीरै-
रभ्युक्षयन्ति तव सङ्गतये प्रदोषे ॥४६॥
सायं प्रदीपमनिधाय गृहे शयाना
मुग्धाङ्गना श्रयति सुप्तिकृतं व्यलीकम् ।
अन्येन भाषितमवेत्य निजापराधं
पारुष्यपूर्णवचनेन मृषा विधत्ते ॥४७॥
श्वश्रूनिदेशमवमत्य वधूर्यथेच्छं
कर्माणि साधयति संसृतिदोषभाञ्जि ।
पत्युः प्रियेषु निजशान्तिपदाविरोधैः
संसज्जते विषयवासनयाऽभिभूता ॥४८॥
देवाय भोज्यमनिवेद्य मृषैव भुङ्क्ते
विप्राय नार्पयति भोजनकाङ्क्षिणे वा ।
स्वामेव तर्पयितुमुत्तरलां रसज्ञां
लोकः प्रयत्नशतमातनुते विशेषात् ॥४९॥
यागाग्निधूमविरहोपचितप्रकोपो
देवो न वर्षति धरोरसि शस्यहेतोः ।
तस्मात् क्षितेः सकलशस्यवियोगदोषाद्
वृद्धिः प्रजासु न भवत्यतिमात्रसारा ॥५०॥
शस्यादिसारपरिशून्यतया धरण्यां
तेजो व्यलुप्यत चिरं जनतासमाजे ।
षड् वैरिणः प्रतिजनं सुतरां जयन्ति
व्याकोप एष कलिनिर्जितपुण्यभूतेः ॥५१॥

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| February, 1940 | १८६१-शकीये माघे<br>२२श-वर्षस्य १०म-संख्या | Vol. XXII<br>No. 10. |
|---|---|---|

प्रकृतिविलासकाव्ये

## पर्वतपारम्यम्

[ निबन्धकः—सा० भू० कृष्णमूर्ति-शास्त्री ]

श्रियं कुर्यादुर्वीधरशिखरमाश्रित्य रुचिरं
समिद्धः श्रीलक्ष्म्याः पतिरुपनिषद्वेद्यचरणः ।
अभिद्रुह्यद्देवान् दनुजकुलमुन्मूल्य सकलं
जगत्क्षेमं कामं विदधदवतीर्य क्षितितलम् ॥१॥

कथङ्कारं पारम्यमहमभिदध्यां शिखरिणां
प्रकृत्यैव स्थैर्यं जगति भजतामुन्नतिमपि ।
क्ष्मां बिभ्राणानां सुभगतरभावैर्विलसतां
महासत्त्वानां संस्तुत-यमि-शतानां च महताम् ॥२॥

महेन्द्राख्यं क्ष्माभृत्प्रवरमयमुर्वीसुरवरः
समारुह्य द्रष्टुं धियमधिकमानोज्ञकमधात् ।
प्रकृत्याः श्रीमातुः सुकृतिसुलभं नृत्यमतुलं
पिबन् दृग्भ्यां लीनो भवति सुखवार्धौ सहृदयः ॥३॥

क्व वा वारां राशिः प्रकृतिमुखरो दुःश्रवरवैः
क्व वाऽरण्यं गुण्येतरमृगगणाकीर्णमनिशम् ।
समुच्छ्रायं प्राप्ताः क्व जगति कुलक्ष्माभृदधिपाः
क्षितेर्मातुर्मूर्ता इव च महिमानो विजयिनः ॥४॥
स्थितः क्वाप्यंश्चामीकरशिखरिसम्राड्कुसुमतीं
तुषाराद्रिर्गौरीगुरुरनघरत्नौघनिलयः ।
अवन्ध्यश्रीर्विन्ध्योऽविरलतरकान्तारबहुलो
महेन्द्राद्रिः सह्यो मलयगिरिरेते बहुमताः ॥५॥
गिरिं दर्शं दर्शं भुवनमपि विस्मृत्य सपदि
द्विजः संबोध्यैवं किमपि किमपि स्वैरमवदत् ।
निवेशः शैलानां सकलमहं ! वाचालयितुम-
प्यलं नेत्रानन्दाकलनकुशलोऽयं सहृदयम् ॥६॥
छदौ चिच्छेदाद्रिप्रवर ! तव वज्रेण मघवा
तदत्यन्तं युक्तं ह्यजनि विधिसङ्कल्पवशतः ।
न चेदेवं दिव्याभरणमतुलं भारतभुवो
जगन्मातुर्देव्याः कथमिव भवेश्चिन्तय मनाक् ॥७॥
निवेशस्ते रम्यः प्रतिजनपदं विन्दति महा-
नरण्यैर्व्याप्तोऽयं विविधमभिधानं श्रुतिसुखम् ।
भवत्प्रान्तग्रामानधरतरवृन्दारकपुरान्
सुखादध्यासीना जगति खलु मर्त्याः सुकृतिनः ॥८॥
हिमाद्रिर्मूर्धानं परमकमनीयोऽनुवसति
त्वमप्येकं पार्श्वं क्षितिभृदुदयाख्योऽपरमपि ।
अलङ्कर्वाथे द्वावुदरमपि विन्ध्यः स भजते
गरीयस्याः स्वर्गादपि शतगुणं भारतभुवः ॥९॥
प्रकृत्या देदीप्रं तव मघवनीलोपलचितं
विचित्रैर्धातूनामवनिधर ! वर्णैः शबलितम् ।

वपुर्भावत्कं श्रीसमुदयविलासैकसदनं
हरत्यक्ष्णोः शक्तिं तरणिकिरणौघप्रगुणिनम् ॥१०॥
द्रुमाः सर्वे नम्राः परिणतफलैस्ते निचुलिताः
प्रतानिन्यः पुष्पैर्मिलदलिकदम्बैः शबलिताः ।
वनान्ताः पाटीरद्रुमपरिमलैस्ते कबलिताः
प्रतीका द्रष्टॄणामचल ! तव नृणां पुलकिताः ॥११॥
असामान्यं शैलाधिप ! वसुमतीत्वं प्रकटय-
स्यनन्तायास्तुङ्गावयवपदमाश्रित्य विशदम् ।
जगज्जीवातूनां शरणमसि मुख्यं जलमुचां
क्षितेरुद्भूता त्वं परमरमणीया परिणतिः ॥१२॥
सरिच्छ्रेण्यः कामं पतनकमनीया नयनयो-
र्दरीभ्यः स्यन्दिन्यो रुचिरवरहीरस्रगुपमाः ।
भुवो देव्याः पीनस्तनभरधुरां भूरि दधतः
परिष्कुर्वन्त्यद्रीन सरसतरपाटीरसुरभीन ॥१३॥
वसानेव स्निग्धं हरितरुचि वासो विलससि
प्ररूढैस्त्वय्यल्पेतरविटपिवीरुत्समुदयैः ।
ससूनैरुत्फुल्लैर्हृदयहरवर्णैरिव मणि-
प्रभेदैराकल्पं कलयसि च माले ! शिखरिणाम् ॥१४॥
समुत्तुङ्गे शृङ्गे समुपचितकार्पासरुचय-
श्चरन्तः स्वच्छन्दं विपरिणतिमाप्त्वा बहुविधम् ।
तवोष्णीषायन्ते ह्यचल ! करिचर्माम्बरशिरः-
सरित्स्रोतस्तोमान भृशमुपहसन्तः सितघनाः ॥१५॥
परिष्कुर्वत्यब्धेस्तटभुवमुदग्रोर्मिमुखराम्
अरण्यानी कामं तव चरणसेवाप्रणयिनी ।
स्फुरत्सत्त्वोद्रेकं हरिहृदयमनोह्लादनपरं
वृणीते त्वां विश्वम्भरमिव हि लक्ष्मीरविरतम् ॥१६॥

अनुद्भूतात्मानः प्रथममथ गण्डोपलपथ-
क्षरद्धाराकारास्तदनु तनुकुल्याकृतिजुषः ।
विनिष्क्रामन्त्योऽद्रेर्विवरनिकरात् पातमुखराः
क्रमात्संवर्ध्य क्ष्मां जलधिमुपगच्छन्ति सरितः ॥१७॥
भुवं कृत्स्नां पुष्णन् दुहितृभिरसङ्ख्याभिरनिशं
समर्प्यैनाः पत्ये महितविभवायाम्बुनिधये ।
प्रशान्तात्मा विश्राम्यसि तटमधिष्ठाय जलधे
महान्तस्ताटस्थ्यं नहि जहति निर्वर्त्य भविकम् ॥१८॥
न वेदायं स्वीयाभ्युदयचयमूलं सलिलधि-
र्यदार्यं नेदिष्ठं गणयति न रात्रिन्दिवमपि ।
अमर्यादं शब्दायत इति जहीहि क्रुधमिमां
क्षमाहीनो नैव श्वशुरपदमध्यासितुमलम् ॥१९॥
समुद्रः प्रत्यग्रैर्मुदिरनिकरैर्वर्धयति ते
गभीरं कान्तारं द्विरदमुख-हिंस्रैः परिवृतम् ।
दरीद्वारस्फारारवमुखरवारां गिरिसरि-
द्वराणां वा राशिं त्वमपि निवहैः स्फावयसि तम् ॥२०॥
प्ररूढास्त्वय्यद्रे ! फलभरविनम्रा द्रुमवराः
परिष्वक्ताः पुष्प्यद्व्रततिभिरुदञ्चद्द्विजरवाः ।
हरन्तः श्रान्तिं द्राङ्मलयमरुदाधूतविटपा
वितीर्याऽऽत्मच्छायां संकरुणमवन्ति श्रितवतः ॥२१॥
धनायान्धाः कामोपहतमतयो द्वेषकलुषा
महारोगग्रस्ताः सततमपमृत्युप्रणयिनः ।
अविद्वांसः सत्यं विहितपरहिंसाभिरुचयः
कथं सौभाग्यं तेऽमितमनुभवेयुः पुरनराः ॥२२॥
अमोघैर्द्युम्नौघैः सदनशतमभ्रङ्कषशिरो-
गृहप्रेङ्खच्चित्रध्वजपटलरोचिष्णु रचितम् ।

अधिप्रस्थं तेऽद्रिप्रवर ! वरसुभ्रूभिरनिशं
रमन्तेऽध्यासीना विषयसुखलोभेन धनिनः ॥२३॥
समीरे पाटीरद्रुमपरिमलोद्गारचतुरे
कुमुद्वत्याश्लेषं कलयति कलानामधिपतौ ।
अधिज्यं प्रद्युम्ने धनुरधिकमाधून्वति मुहु-
र्व्यथां हृद्यां काञ्चिद्युवजनमनांसि द्रुतमधुः ॥२४॥
चिरादाकाङ्क्षन्तीमतिबलवशामप्यवसरं
विजानन् रोलंब ! त्वमनुभव कामं कुसुमिताम् ।
इमां वल्लीं स्निग्धामिति मदिरनेत्रा विलसितै-
रपश्यन्तीवान्यं तरुणमभणत् काप्युपवने ॥२५॥
उदञ्चद्भ्रूवल्लिः प्रणयकलहेन प्रियतमे
परिष्वङ्गं कुर्वत्यनुनयवचोभिः सरभसम् ।
परं संमन्वानास्तनयुगलसङ्घर्षणसुखं
शनैराचिक्षेप प्रियकरयुगं कापि तरुणी ॥२६॥
स्मरार्ता प्राणेशं चिरमधरपानैकरसिकं
निवार्य द्राक् साचीकृतनिजमुखाब्जेन चतुरा ।
सहासं प्रोवाच स्पृशसि यदि नीवीं सरभसं
विदध्यां ते शिक्षां नियतमिति काचिद्वरतनुः ॥२७॥
कबर्याः स्निग्धाया श्रथनमिपतः कापि युवतिः
कथञ्चिद्विस्रंस्य स्वयमुपरि वासोऽभ्रसदृशम् ।
मुहुर्बाहूत्क्षेपैस्तरुण-नरमेकं वशयितुं
व्यनक्ति स्माऽऽमूलं पृथुलतरवक्षोजयुगलम् ॥२८॥
समुत्क्षिप्य क्षौमं विहरति मरुत्येकसुतनू-
रुदभ्रभ्रूभङ्गं स्तनयुगसमाच्छादनविधिम् ।
पुरो यूनः कस्याप्यसकृदभिनिन्येऽपि तु परं
व्यभातामूरू द्वौ मदनविजयस्तम्भसदृशौ ॥२९॥

अदर्शः किं ? कामोपम ! मम पतिं पर्वतभुवि
प्रवासी नायास्यत्यचिरमथवा यामि सदनम् ।
ब्रुवाणेत्थं नैवोदचलदसकृद्वीक्ष्य कमपि
स्वनिश्वासोत्कम्प्रस्तनभरविनम्रं करमणी ॥३०॥

( क्रमशः )

---

# आश्रमधर्मः

( भाद्रसंख्यातोऽनुवर्तते )

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः एम्. ए. ]

अमितत्वेऽपि अतिभोजनं मनुनैव निषिद्धं यथा—

नचैवात्यशनं कुर्यान्नचोच्छिष्टं क्वचिद्व्रजेत् ।
अनारोग्यमनायुष्यमस्वास्थ्यञ्चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तत् परिवर्जयेत् ॥ इति ।

दैवपैत्रकर्मसु पित्रादिब्राह्मणत्वेन निमन्त्रितो ब्रह्मचारी भुञ्जीत । तेन नास्य व्रतलोपः स्यादिति । एतदाह मनुर्यथा—

व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् ।
काममभ्यर्हितोऽश्नीयाद् व्रतमस्य न लुप्यते ॥ इति ।

व्रतवदृषिवदित्यनेन मधुमांसादिभोजननिषेधोऽभिप्रेतः । याज्ञवल्क्योऽप्याह यथा—

ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ इति ।

ब्राह्मण इत्युक्त्या क्षत्रियवैश्यब्रह्मचारिणोः श्राद्धे भोजनं निषिद्धम् ।

व्रतपीडा च मधुमांसादिभोजनेन भवतीति तदकुर्वन्निस्यर्थः। व्रतघ्नत्वेन वर्जनीयान्याह मनुर्यथा—

वर्जयेन्मधु मांसञ्च गन्धं माल्यं रसान् स्त्रियः।
शुक्तानि चैव सर्वाणि प्राणिनाञ्चैव हिंसनम्॥
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम्।
कामं क्रोधञ्च लोभञ्च नर्तनं गीतवादनम्॥
द्यूतञ्च जनवादञ्च परीवादं तथानृतम्।
स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च॥ इति।

रसा इक्षुरसादयः। मधुनो रसत्वेऽपि पृथक् तदुपादानमधिकदोषायेति बोद्धव्यम्। गौतमोऽप्याह यथा—"वर्जयेन्मधुमांसगन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जन-यानोपानच्छत्र-काम-क्रोध-लोभ-मोह-वादन-स्नान-दन्तधावन-हर्ष-नृत्य-गीत-परीवाद-भयानीति"। याज्ञवल्क्यश्चाह यथा—

मधुमांसाञ्जनोच्छिष्ट-शुक्तस्त्रीप्राणिहिंसनम्।
भास्करालोकनाश्लीलपरीवादादि वर्जयेत्॥ इति॥

उच्छिष्टं भुक्तावशिष्टम्। तत्तु गुरुव्यतिरिक्तमिति बोध्यम्, "उच्छिष्टमगुरोरभोज्यमि"ति वशिष्ठवचनेन गुरोरुच्छिष्टभोजने दोषाभावकीर्तनात्। शुक्तं परुषं वचः, स्वभावमधुरं कालवशादम्लतां गतं दध्यादिव्यतिरिक्तं भोज्यञ्च। भास्करालोकनमिति भास्करस्योद्यतोऽस्तं गच्छतश्चालोकनम्। तथा च मनुः—

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्॥ इति।

अन्यथा सर्वथादित्यदर्शनाभावे भिक्षादीनामपि बाधः स्यात्।

अथ वेदाध्ययनमाह मनुर्यथा—

तपोविशेषैर्विविधैर्व्रतैश्च विधिनोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना॥ इति।

यस्य च या शाखा पित्रादिक्रमागता तच्छाखीयेन विधिना संस्कृतः प्रथमं तां शाखामधीत्य ततः शाखान्तरमधीयीत इत्येतदाह वशिष्ठो यथा—

यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् ।
अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ॥ इति ।

वैदिककर्माण्यपि तच्छाखीयविधानेनैव कार्याणीत्येतदाह स एव यथा—

परम्परागतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥ इति ।

शाखान्तरीयविधानेन कर्मकरणे दोषमाह लौगाक्षिर्यथा—

यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ।
स शूद्रवद् बहिस्कार्यो हव्यकव्येषु दातृभिः ॥ इति ।

कात्यायनोऽप्याह—

स्वशाखाश्रयमुत्सृज्य परशाखाश्रयन्तु यः ।
कर्तुमिच्छति दुर्मेधा मोघं तत् तस्य चेष्टितम् ॥ इति ।

वशिष्ठश्चाह—

न जातु परशाखोक्तं बुधः कर्म समाचरेत् ।
आचरन् परशाखोक्तं शाखारण्डः प्रकीर्तितः ॥
यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत् ।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति ॥ इति ।

वेदाध्ययनस्य नाक्षरग्रहणमात्रत्वमपि त्वर्थज्ञानपर्यवसायित्वम् । तथाचाह पराशरः—

ज्ञातव्यः सर्ववेदार्थो वेदानां कर्मसिद्धये ।
पाठमात्रमधीते यः पङ्के गौरिव सीदति ॥
वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चैव हि ।
अजानतोऽर्थं तद् व्यर्थं तुषाणां कण्डनं यथा ॥
पाठमात्ररतान्नित्यं द्विजांश्चार्थविवर्जितान् ।
पशूनिव च तान् प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥ इति ।

उशना चाह—

योऽधीत्य विधिवद् वेदं वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥ इति ।

लघुव्यासोऽप्याह—

न वेदपाठमात्रेण सन्तोषं कारयेद् द्विजः ।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥
यथा पशुर्भारहारी न तस्य लभते फलम् ।
द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते ॥ इति ।

वेदाभ्यासस्य पञ्चविधत्वमाह दक्षो यथा—

वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानञ्चैव विप्रेभ्यो वेदाभ्यासो हि पञ्चधा ॥इति ।

वेदाध्ययनस्य श्रेष्ठतपस्त्वमुक्त्वाऽध्ययनफलमाह मनुर्यथा—

वेदमेव सदाऽभ्यस्येत् तपस्तप्स्यन् द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥
आहैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥ इति ।

अधीतशास्त्रस्याप्यननुष्ठानशीलस्य निन्दामाह स एव यथा—

सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥ इति ।

अध्ययननियममाह मनुरेव यथा—

ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥ इति ।

द्वितीयजन्मन्युपनयने गुरुरेव पिता इत्येतदाह स एव यथा—

मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ।
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥

तत्र यद् ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम्।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ इति।

आचार्यसेवकस्य ब्रह्मचारिणस्तद्गृहे कर्तव्यमाह व्यासो यथा—

जघन्यशायी पूर्वं स उत्थाय गुरुवेश्मनि।
यच्च शिष्येण कर्तव्यं कार्यं दासेन वा पुनः ॥
कृतमित्येव तत् सर्वं कृत्वा तिष्ठेन पार्श्वतः।
किङ्करः सर्वकाले च सर्वकर्मसु कोविदः ॥
नाभुक्तवति चाश्नीयाद् अपीते चाम्बु नो पिबेत्।
न च तिष्ठत्युपविशेदासीनः प्रस्वपेन्न वा ॥ इति।

याज्ञवल्क्यश्चाह—

गुरुञ्चैवाप्युपासीत स्वाध्यायार्थं समाहितः।
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ॥ इति।

नियमविशेषमाह यमो यथा—

गुर्वधीनोऽस्वतन्त्रः स्यात् पूर्वोत्थायी गुरोर्गृहे।
सदाऽजघन्यसंसेवी जितस्मरो जितोदरः ॥
जितनिद्रो जितालस्यो जितक्रोधो जितात्मवान्।
शुश्रूषुरनहन्ता च गुरुदेवार्चने रतः ॥ इति।

हारितश्चाह "अथोदकुम्भकुशपुष्पसमिन्मूलफलाहरणसम्मार्जनोपलेपनाङ्गशुश्रूषाप्रभृतिभिर्गच्छन्तं शयानमासीनं भक्त्याऽनुवर्तेत नास्य निर्माल्यशयनासने छायापादुके चाक्रामे"दिति। गुरुपूजाफलमाह शङ्खो यथा—

न स्नानेन न होमेन नैवाग्निपरिचर्यया।
ब्रह्मचारी दिवं याति स याति गुरुपूजनात् ॥ इति।

गुरुणा सहैकासनोपवेशननिषेधमाह मनुर्यथा—

नीचशय्यासनं चास्य नित्यं स्याद् गुरुसन्निधौ।
गुरोश्च चक्षुर्विषये काचिच्चेष्टास्य नो भवेत् ॥ इति।

एतच्च गोयानादिव्यतिरिक्तविषयम्। तथाच स एवाह—

गोऽश्वोष्ट्रयान-प्रासाद-प्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलक-नौषु वा ॥ इति ।

ननु हारीतेन "हस्त्यश्वारोहणञ्चैव संत्यजेत् संयतेन्द्रियः" इत्यादिना तदारोहणं निषिध्यते मनुना च तद्विधीयत इति विरोधोऽनयोरिति चेन्न, मनुवचनञ्चैतदापद्विषयकं ज्ञेयम् । विष्णुरप्याह "नास्यैकासनो भवेदन्यत्र शिलाफलक-नौयानेभ्य" इति । गुरुनिन्दाश्रवणनिषेधमाह मनुर्यथा—

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ इति ।

सतो दोषस्य ख्यापनं परीवादः । तथाह सतो दोषस्य ख्यापनं निन्देति । स्वयं गुरुनिन्दाकरणे दोषमाह मनुरेव यथा—

परीवादात् खरो भवति श्वा वा भवति निन्दकः ।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरः ॥ इति ।

परिभोक्ता च यो गुर्वननुज्ञातस्तद्धनं भुनक्ति तादृशः । हारीतोऽप्याह—

अमृतस्य प्रदातारं गुरुं यस्त्ववमन्यते ।
न चैनं वहति ब्रह्म तिर्यग्योनौ च जायते ॥
ऋचं वा यदि वार्द्धं वा पादं वा यदि वाऽक्षरम् ।
सकाशाद् यस्य गृह्णीयान्नियतं तस्य गौरवम् ॥ इति ।

गुरोर्नामोच्चारणे दोषमाह मनुर्यथा—

नोदाहरेदस्य नाम परोक्षमपि केवलम् ।
न चैवास्यानुकुर्वीत गतिं भाषितचेष्टितम् ॥ इति ।

अत्र केवलमित्युक्तेः समक्षमुपाध्यायादिपदेनायं सम्बोध्यः । परोक्षमप्यस्यान्यस्मै परिचयदानकाले उपाध्यायादि-पदसंयुक्तं नामोल्लिखेत् । तथाच गौतमः "नाम-गोत्रे गुरोः समानतो निर्दिशेदि"ति । समानतो मानेन सहेत्यर्थः । गुरुवद् गुरुपत्न्यादयोऽपि सेव्या इत्येतदाह नारदो यथा—

आ विद्याग्रहणाच्छिष्यः शुश्रूषेत सततं गुरुम् ।
तद्भक्तिं गुरुदारेषु पुत्रपौत्रे तथैव च ॥ इति ।

मनुस्तु गुरुपत्न्या अभ्यञ्जनादिकरणं निषेधति यथा—

अभ्यञ्जनं स्नपनञ्च गात्रोद्वर्तनमेव च ।
गुरुपत्न्या न कार्याणि केशानाञ्च प्रसाधनम् ॥
ब्रह्मचर्यं तपो भैक्षं सन्ध्ययोरग्निकर्म च ।
स्वाध्यायो गुरुवृत्तिश्च चर्येयं ब्रह्मचारिणाम् ॥ इति ।

तपश्चात्र ब्रह्मचारिनियमः । अन्यत् सर्वमाकरे ज्ञेयम् ।

अथोपकुर्वाण-नैष्ठिक-भेदेन ब्रह्मचारिद्वैविध्यमाह दक्षो यथा—

द्विविधो ब्रह्मचारी तु स्मृतः शास्त्रे मनीषिभिः ।
उपकुर्वाणकस्त्वाद्यो द्वितीयो नैष्ठिकः स्मृतः ॥ इति ।

अत्रोपकुर्वाणस्वरूपमाह व्यासो यथा—

उपकुर्वाणको यस्तु द्विजः षड्विंशवार्षिकः ।
केशान्तकर्मणा तत्र यथोक्तचरितव्रतः ॥
समाप्य वेदान् वेदौ वा वेदं वा प्रसभं द्विजः ।
स्नायीत गुर्वनुज्ञातः प्रवृत्तोदितदक्षिणः ॥ इति ।

अत्रायमर्थः—यः प्रागुक्तब्रह्मचारिव्रतं यथोक्तकालं सम्पाद्य तत्राश्रमे वेदान् वेदौ वेदं वाधीत्य यथाविहितस्नानानन्तरं स्वशक्त्या गुरवे दक्षिणां दत्त्वा तदनुमतिक्रमेण समावर्तनं करोति स एवोपकुर्वाणो ब्रह्मचारीत्युच्यते । लघुविष्णुराह—

अनेन विधिना सम्यक् कृत्वा वेदमधीत्य च ।
गृहस्थधर्ममाकाङ्क्षन् गुरुगेहादुपागतः ॥ इति ।

अत्रानेन विधिनेति ब्रह्मचर्यावलम्बनेन तद्धर्ममनुतिष्ठन् उपकुर्वाणो गुरुगेहात् समावर्तनं कुर्यादित्यर्थः । मनुराह—

न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित् ।
स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥

क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमन्ततः ।
धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत् ॥ इति ।

विधिरयमुपकुर्वाणस्यैव, नैष्ठिकस्य स्नानाभावात् । ब्रह्मचर्यावस्थायां तादृशद्रव्ययाच्ञानिषेधात् स्नास्यन्नित्युक्तम् । स्नानकाले प्राप्ते प्रतिग्रहादिनापि पूर्वोक्तद्रव्याण्याहृत्य गुरवे दक्षिणां दद्यादिति ।

दक्षश्चाह—

स्वीकरोति यदा वेदं चतेद् वेदव्रतानि च ।
ब्रह्मचारी भवेत्तावदूर्ध्वं स्नातो गृही भवेत् ॥ इति ।

एतद्वचनमप्युपकुर्वाणविषयकमेव ब्रह्मचर्यानन्तरं द्वितीयाश्रमग्रहणोपदेशात् ।

नैष्ठिकलक्षणमाह लघुविष्णुर्यथा—

वेदस्वीकरणे हृष्टो गुर्वधीनो गुरोर्हितः ।
निष्ठां तत्रैव यो गच्छेन्नैष्ठिकः स उदाहृतः ॥ इति ।

निष्ठामिति समाप्तिम्, आमरणं गुरुकुले वास इति तात्पर्यम् । व्यासश्चाह—

यस्तूपनयनादेतदा मृत्योर्व्रतमाचरेत् ।
स नैष्ठिको ब्रह्मचारी ब्रह्मसायुज्यमाप्नुयात् ॥ इति ।

अत्रायमर्थः—यस्तूपनयनमारभ्य आमृत्यु गुरुकुले वसन् एतद् ब्रह्मचर्यव्रतमनुतिष्ठेत् स नैष्ठिकब्रह्मचारीति कथ्यते । एतस्य फलमाह ब्रह्मसायुज्यमाप्नुयादिति । नैष्ठिकब्रह्मचारिणमधिकृत्य मनुराह यथा—

यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले ।
युक्तः परिचरेदेनमा शरीरविमोक्षणात् ॥
आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम् ।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम् ॥ इति ।

शरीरस्या समाप्तेः मृत्युपर्यन्तमित्यर्थः । गुरौ प्रेतीभूतेऽपि नैष्ठिकस्य विधानमाह याज्ञवल्क्यो यथा—

नैष्ठिको ब्रह्मचारी च वसेदाचार्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ इति ।

तदभाव इति आचार्यसान्निध्याभावे गुरुपुत्रे, तदभावे गुरोः सवर्णायां पत्न्यामिति "गुरुदारे सवर्णे वा" इत्यादिमनुवचनात् । सर्वाभावे तु आचार्याग्निसन्निधौ वसेत् न तु समावर्त्ततेति तात्पर्यम् । मनुश्चाह—

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद् वृत्तिमाचरेत् ।।
एतेष्वविद्यमानेषु स्थानासनविहारवान् ।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ इति ।

---

# पारेसमुद्रम्

[ निबन्धकः—आर. अप्पन्नाचार्यः, बि.ए. ]

*स्वपादपीठायितनामभूभृन्नामाब्धिकन्याकरपुष्करस्य ।
सूयेत मे भक्तमधुव्रतायामृतं नृसिंहस्य पदाम्बुजन्म ॥१॥
सुव्यापृतिश्रान्ततया दिनान्ते विश्रान्तये सागरमागतोऽस्मि ।
एवंविधैरेव हि संविधानैः प्रफुल्लतां कूणितमेति चेतः ॥२॥
आगन्तुकं मामयमप्युदन्वान् फेनावलिव्यञ्जितमन्दहासः ।
समाह्वयत्यूर्मिकरैस्तथाहि शिष्टोऽतिथेः सत्कृतिकृत् प्रकृत्या ॥३॥
युगान्तकालप्रतिसंहृतानि जगन्ति बिभ्रत्पुरुषः किमेषः ।
शङ्खी गभीरो नवनीरदाभः कुक्षिस्थनानाजलजन्तुजालः ॥४॥
सा मे वधूष्वेकतमाऽपि चित्रं ! मन्दाकिनी मां न हि सङ्गतेति ।
दीर्घोष्णनिश्वासमिवाम्बुराशिर्वेलानिलेन प्रकटीकरोति ॥५॥

---

* श्रीनामगिरिलक्ष्मीः, सेयं कुलदेवता निबन्धकस्य

चुम्बन्नदीः केवलभूमिजाता य उत्क एषो रमते प्रकामम् ।
अहो ! महानित्यपि लब्धवर्णो न मे प्रियत्वे भवितुं स साधुः ॥६॥
अहं तु कृष्णाङ्घ्रिपयोजयोनिः पिनाकिनो मूर्ध्नि च राजमाना ।
इतीव सिन्धुं दृढदृप्तमत्ता स्वर्गापगा किन्तु तिरश्चकार ॥७॥
अनेकवर्णांशुकचित्रदृश्यैः संस्मारयत्यब्धितटं जनौघैः ।
प्रफुल्लनानाप्रसवं वनान्तम् अन्तर्डयच्चित्रपतङ्गसङ्गम् ॥८॥
आकर्षति प्रेष्ठ इव स्वकीये नभस्वति स्वं परिधानमेताः ।
तत्संनिगृह्णन्ति विलज्जमाना ऊरुप्रदेशार्पितलोलहस्ताः ॥९॥
वेणीवनद्धामपि पुष्पमालां स्वसंनिवेशाद्गलितां विचिन्त्य ।
सरोषमाकृष्य तु काऽपि योषा पदे पदे पूर्वपदे करोति ॥१०॥
अन्या तु कन्या करवेत्रखण्डं निजाङ्गुलीरन्ध्रविचारि धत्ते ।
परा तु नारी करवस्त्रखण्डं अङ्गुष्ठतर्जन्युपगूढकोटिम् ।
धुनोत्यसौ संभ्रमचञ्चलाक्षी निश्वासलोलं मधुपं विनेतुम् ॥११॥
काप्यर्पयित्वा स्वशिशुं तु धात्र्यै हस्तेन हस्तं परिपीड्य भर्तुः ।
मिथस्तदाभाषणलोलुपाऽऽस्ते स्त्रैणस्य लक्ष्म्याश्च गतिर्हि वक्रा ॥१२॥
अंसस्खलद्गन्धवहानुयायिमरालचित्रप्रचुरोत्तरीयाः ।
सुवर्णयष्टिप्रतिमा इमा हि काञ्चीगुणस्निग्धबृहन्नितम्बाः ।
कुर्वन्त्यवस्थाभिरिव स्वकाभिर्मृषा सुमेषोर्मकरध्वजत्वम् ॥१३॥
क्रीतः क्व चेलोऽयमहो ! नवीनो विभूष एष क्रियते च केन ।
इत्यादिपृच्छाशतमर्पयन्त्यः परस्परं प्रत्यबलाश्चलन्ति ॥१४॥
अप्रस्फुटं च स्खलितं द्रवद्भिरालापजालैर्हृदयस्य चोरम् ।
सद्यःसमभ्यस्तगतिप्रकारं प्रसारितैकाङ्गुलिबालनालम् ॥१५॥
माता पिता चोभयतो गृहीत्वा निजं तनूजं परितो नयन्तौ ।
आनन्दविस्फूर्तिनिमीलिताक्षौ मुक्तेः सुखं त्वैहिकमेव वित्तः ॥१६॥
अन्योन्यसाकूतविसृष्टदृष्टी संलापमत्तौ पितरौ विलोक्य ।
जानुद्वयं स प्रणिपात्य भूमौ तथा पुरः पाणितलौ च बालः ।

ब्रूते वयस्यं करिवच्चरेयम् आधोरणत्वं त्वमवाप्नुहीति ॥१७॥
अलंगलत्पाणिप्रवालतालं दरस्फुरत्कुड्मलदन्तचारु ।
हसन्ति नृत्यन्ति लुठन्ति यान्ति स्खलन्ति धावन्ति च ते तु पोताः ॥१८॥
तत्त्वाय नूनं स्पृहयामि बाल्यं तदेकमेवामलहर्षवर्षि ॥१९॥
केचिज्जनन्या जनकेन चान्ये भ्रात्रा तथैके सुहृदा तथान्ये ।
केचिन्निजप्रेष्ठतमैर्जनैश्च प्रायः समस्ता मिथुनं चरन्ति ॥२०॥

---

# विश्वासदेवी-कृता गङ्गा-वाक्यावली

[ निबन्धकः—डा० यतीन्द्रविमल-चतुर्धुरीणः ]

संस्कृत-साहित्येषु नारीणां कृतिः सर्वतोमुखी । अत्र वयं नारी-कृति-ष्वन्यतमां विश्वासदेवीकृतां गङ्गावाक्यावलीमधिकृत्य किञ्चिद् वक्तुकामाः स्मः ।

विश्वासदेवी-कृतिरन्या कापि नाद्यापि अस्मदृष्टिगोचरीभूता, पुस्तकेऽस्मिन् यद्यपि तस्याः परिचय-रूपाणि विवरणानि न बहुलानि लभ्यन्ते तथापि सा विद्यापतेः समसमयेति ग्रन्थादस्माज्ज्ञायते । अतः सा शिवसिंहानुज-चन्द्र-सिंहपत्नी विद्यापति-महिता मिथिला-राज्ञी लक्ष्मी [लखिमा-]देवी-सिंहासन-परिपूरयित्रीति विज्ञायते । विद्यापतिः शिवसिंह-लखिमादेवी-सभाकविरपि आसीत् इत्यस्मात् स विश्वासदेव्या वयसा ज्यायान् इति अनुमीयते । तयोः कालस्तु खीष्टीय-चतुर्दश-शताब्दीति प्रथितमेव ; ततः सा खीष्टीय-पञ्चदश-शताब्दी-समये जन्मपरिग्रहं स्वीचकारेति मन्यामहे ।

गङ्गा-वाक्यावलीयं स्मृति-शास्त्र-रूपा । पूत-भागीरथी-स्मरणादिविषय-काणि विविधानि कृत्यानि अस्य वर्णन-विषयाः । विद्यन्तेऽत्र सप्त-विंशतिः

प्रकरणानि स्मरण-कीर्तन-यात्रा-श्रवण-गति-वीक्षण-नमस्कार-स्पर्शन-श्राद्धा-भय-सर्वबन्धु-प्रतिकृति-क्षेत्रावगाहन-स्नान-तर्पण-मृत्तिका-जप-दान-जलतोय-पानाश्रय-प्रायश्चित्त-कृतकृत्य-मृत्यस्थिस्थिति-प्रयागमरण-विघ्न-समाख्यानि। प्रमाण-वाक्यानि प्रायशः पुराण-स्मृति-ज्योतिः-शास्त्रेभ्यः संगृहीतानि; तान्यधिकृत्य विरचितानि विश्वासदेव्या सङ्कल्पवाक्यानि सर्वाणि। ग्रन्थमेतमाश्रित्य भक्तास्तीर्थगामिनस्तीर्थगता वा गार्हस्थ्याश्रमभाजस्तद्-व्यतिरिक्ता वा सर्वे पुण्यबलाः पार्थिवमपार्थिवं वा सुखं स्वर्गं मोक्षं वा प्राप्नुयुरित्यहो मिथिलाधीशाया महिममण्डितः प्रयत्नः। स्मरण-कीर्तनादिषु प्रकरणेषु वक्तव्य-विषयाः सुष्ठु बहुशः प्रोक्ताः, समालोचनानि च हृद्यानि निरपेक्षाणि च। प्राचीन-ग्रन्थेऽस्या ग्रन्थकर्त्र्या अधिकारः सर्वथा विस्मयजननशीलः। ततोऽप्यद्भुतमिदं यत् सा सविशेषं सम्यक् सर्वमविविच्य न किञ्चन वाक्यं स्वीचकारेति। विरुद्ध-वाक्य-समन्वये तस्याः प्रतिभा निपुणं प्रदर्शिता। श्राद्ध-प्रयागवपने अधिकृत्य अस्या विचारप्रसङ्गावतार-मीमांसे धीमतामपि व्यामोह-निराकरण-चित्त-प्रसादन-कुशले। गङ्गा-वाक्यावली गङ्गा-विषयक-ग्रन्थेषु श्रेष्ठा वर्णन-विषय-बाहुल्या-द्वर्णन-गौरवाद्धर्म-प्रचोदनाच्चेति न कोऽपि सन्देहः। स्मार्त-शिरोमणि-रघुनन्दनोऽपि अस्य ग्रन्थस्य वाक्यानि भूयो भूय उद्धृतवांस्तस्य मलमास—प्रायश्चित्त-श्राद्ध-तिथि-तत्त्वाख्येषु निबन्धेष्वित्यहो महान् महिमा विश्वास-देव्या धर्मप्राणताया विद्यावत्तायाश्च। ग्रन्थोऽयमंशतोऽपि नायसाक्षरै-र्मुद्रित इति निर्धार्य वङ्गीय-रयाल-एसियाटिक-सोसाइटीस्थौ द्वौ*-इण्डिया-अफिसस्थमृ†-एकमादर्शमनुसृत्यास्माभिरद्य प्रकाश्यते। सर्वप्रकाशश्च

* महामहोपाध्याय हरप्रसाद-शास्त्रि-कृत-काव्य-ग्रन्थ-क्याटालग, १६२५' पृः ८५५-५६, संख्ये २८३६-४०।

† इगेलिङ्ग [Eggeling]-कृत-क्याटालग, चतुर्थ-खण्डः, १८६४, पृष्ठा ८७५-७६।

पत्रिकायामसम्भव इत्यंशत एवायं पाठकेभ्य उपह्रियते। सत्यवसरे ग्रन्थाकारेणायं मुद्रापयिष्यत इत्याशास्यते। इण्डिया-अफिसाधिकृतादर्शः कलिकाता-महानगरीस्थ-इम्पीरियाल-लाइब्रेरी-ग्रन्थागाराध्यक्ष-महोदयैरस्मदनुरोधेन श्वेतद्वीपादानीतः। सर्वथाऽस्मत्-पाठ-सहायतां कुर्वाणेभ्य एसियाटिक-सोसाइटी-सम्पादक-महोदयेभ्य इम्पीरियाल-लाइब्रेरी-अध्यक्ष-महाशयेभ्यः, विशेषतः इण्डिया-अफिस-लाइब्रेरी-ग्रन्थागाराध्यक्ष-पण्डित-प्रवर-डक्टर एइच्. एन. रेण्डेल, [Dr. H. N. Randle] महाशयेभ्यः कृतज्ञतां विज्ञापयामि।

## गङ्गावाक्यावली

स्वस्त्यस्तु वस्तुहिन-रश्मिभृतः प्रसादादेकं वपुः श्रितवतो हरिणा समेत्य।
तन्नाभि-पङ्कज-सहोत्थ-मृणाल-लीलामाविष्करोति हृदि यस्य भुजङ्ग-राजः[1] ॥
यावद् गङ्गा विभाति त्रिपुर-हर[2]-जटा-मण्डलं मण्डयन्ती
मल्ली-माला[3] सुमेरोः शिरसि सित-महावैजयन्ती[4] जयन्ती।

1. The reference is to the combined body of Hari and Hara. The serpent Śeṣa which serves as a decoration of Śiva's body watches with interest the sportive movements of the lotus fibre arising out of the navel-lotus of Hari. For details about Hari and Hara, see HariV., chap. 125, pp. 373-375. ; VāmP., Chap. 59, सार्धं-त्रिनेत्रं कमलाहि-कुण्डलं...हरिं हरञ्चैव नगेन्द्र-भूषणं, etc.

2. त्रिपुरहर is Śiva who burnt the three citadels made of gold, silver and iron in the sky, air and earth and occupied by the Asuras ; cp. Tait Saṃh., vi, 2, 3, 1 ; AitBr., ii, 11 ; ŚatBrā, vi. 3. 3. 25.

3. त्रिपुर......मल्ली माला cp. मदन-मथन-मौलेर्मालती-पुष्प-माला, Vālmīki's Gaṇgā-stava.

4. Cp. स्वर्गारोहण-वैजयन्ति ; etc. ; op. cit,

M. Vasanta-tilaka.

यावत् पाताल-मूलं स्फुरदमल-रुचिः शेष-निर्मोक-वल्ली
तावद् विश्वास-देव्या जगति विजयतां गाङ्ग-वाक्यावलीयम् ।।

× × × × × ×

अथ तोय-पान-प्रकरणम् ।

स्कान्दे—"योऽसौ निरञ्जनो देवश्चित्-स्वरूपी जनार्दनः ।
स एव द्रव-रूपेण गङ्गाम्भो नात्र संशयः ।।"

स्कान्द-मात्स्ययोः—

"तीर्थ-यात्रादिकं कृतस्नमकुर्वाणोऽपि मानवः ।
गङ्गा-तोयस्य माहात्म्यात् सोऽप्यत्र फलभाग्भवेत् ।।"

भविष्ये—"कन्या-दानैस्तथाऽन्यत्र भूमि-दानैश्च भक्तिनः ।
अश्व-दानैश्च गो-दानैः स्वर्ण-दानादिभिस्तथा ।।
रथाश्व-गज-दानैश्च यद् यल्लाभमुदाहृतम् ।
तत्तच्छत-गुणं गङ्गा-तोय-पानादवाप्नुते ।।"

अद्य बहु-कन्या-बहु-भूमि-बह्वन्न-बहु-गो-दान-बहु-स्वर्ण-दान-रथाश्व-गज-दान-जन्य-पुण्य-शत-गुण[पुण्य]-प्राप्ति-कामो गङ्गा-तोय-पानमहं करिष्ये ।

महाभारते—"चान्द्रायण-सहस्रेण यश्चरेत् काय-शोधनम् ।
यः पिबेद्वै यथेष्टन्तु गङ्गाम्भः स विशिष्यते ।।"

अद्य चान्द्रायण-सहस्र-जनित-काय-विशुद्धि[1]-प्राप्ति-कामो गङ्गाम्भः-पानमहं करिष्ये ।

ब्रह्माण्डे—"गङ्गा-तीरे वसेन्नित्यं गङ्गा-तोयं पिबेत् सदा ।
दीक्षितः सर्व-यज्ञेषु सोम-पानं दिने दिने ।।"

अद्य सर्व-यज्ञ-दीक्षितत्व-जन्य-पुण्य-सम-पुण्य-प्राप्ति-पूर्वक-प्रतिदिन-सोम-पान-प्राप्ति-कामो गङ्गा-तोय-पानमहं करिष्ये ।

---

1. A. add. r. 'त्वशुद्धि' not found in C.

स्कान्दे—"गण्डूष-मात्र-पानेन[1] अश्वमेध-फलं लभेत् ।
स्वच्छन्दं यः पिबेदाप[2]स्तस्य मुक्तिः करे स्थिता ॥"

अद्य अश्व-मेध-यज्ञ-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गा-जल-पानमहं करिष्ये। सकृदल्प-जल-पान-मात्रे एतदेव फलम्। स्वच्छन्द-जल-पाने तु मुक्तिः फलम्।

दान-धर्मे—"चान्द्र-व्रत-सहस्रन्तु यश्चरेत् काय-शोधनम् ।
पिबेद् यश्चापि गङ्गाम्भः समौ स्यातां [नरौ ? नवा] समौ ॥"

अद्य चान्द्रायण-व्रत-सहस्र-करणक-काय-शोधन-विशिष्ट-काय-शुद्धि-कामो गङ्गाम्भःपानमहं करिष्ये ।

स्कान्दे—"त्रिभिः सारस्वतं तोयं सप्तभिश्चाथ यामुनम् ।
नार्मदं दशभिर्मासैर्गाङ्गं वर्षेण जीर्यति ॥
नाभ्यन्तर्गत-तोयानां मृतानां क्वापि देहिनाम् ।
तद्वत्तीर्थ-फल-प्राप्तिर्नात्र कार्या विचारणा ॥
वर्ज्यं पर्युषितं तोयं वर्ज्यं पर्युषितं दलम् ।
न वर्ज्यं जाह्नवी-तोयं न वर्ज्यं तुलसी-दलम् ॥"

आश्रय-प्रकरणम् ।

ब्रह्माण्डे—"परमात्मा शिवो[ह्यस्या ? ह्यन्य]स्तस्मादन्या[3] हि जाह्नवी ।
इति यः सेवते गङ्गां स न[4] मोक्षस्य भाजनम् ॥"

दान-धर्मे—"अन्धाः क्लीवा जडा व्यङ्गाः पतिता रोगिणोऽन्त्यजाः ।
गङ्गां संसेव्य पुरुषा देवैर्गच्छन्ति तुल्यताम् ॥"

महाभारते—"पितृ-मातृ-सुतैः सर्वैः संत्यक्तः पतितोऽपि वा ।
महारौरव-योग्यश्चेत्तामाश्रित्य दिवं व्रजेत् ॥"

---

1. V. r. A. [IOL. Ms.] गण्डूष-पान-मात्रेण ।
2. V. r. A. पिबेच्चाप ।
3. V. r. A. तस्माद्धन्या ।
4. V. r. C. स नो ।

दान-धर्मे—"ऊर्जावतीं महापुण्यां मधुमतीं त्रि-वर्गदाम्[1]।
त्रिलोक-गोप्त्रीं ये गङ्गामाश्रितास्ते दिवं गताः ॥"
अद्य दिव-गमन-कामो गङ्गामहमाश्रये।
तथा—"[यस्यां ? योऽस्यां]वसेद्र[2]क्षति चापि मर्त्य-
स्तस्मै प्रयच्छन्ति शुभानि देवाः।
तद्भावितः[3] स्पर्शन-दर्शनेन
इष्टां गतिं तस्य सुरा दिशन्ति ॥"
अद्य बहु शुभ-प्राप्ति-कामो गङ्गा-वासमहं करिष्ये।
नारदीये—"किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः।
वास एव हि गङ्गायां ब्रह्म-ज्ञानस्य कारणम् ॥"
अद्य ब्रह्म-ज्ञान-प्राप्ति-कामो गङ्गा-वासमहं करिष्ये।
स्कान्दे—"सर्व-देवैश्च मर्त्यैश्च पूजनीयो महर्षिभिः।
यो वै गङ्गां समाश्रित्य सुखं तिष्ठति निर्भयः ॥"
अद्य सर्व-देव-बहु-मर्त-बहु-महर्षि-पूजनीयत्व[4]-प्राप्ति-कामो गङ्गामाश्रित्य स्थितिमहं करिष्ये।

दानधर्मे—"लम्बेदवाक्शिरा[5] यस्तु युगानामयुतं पुमान्।
यस्तिष्ठति यथेष्टन्तु गङ्गायां स विशिष्यते ॥
तिष्ठेद् युग-सहस्रन्तु पादेनैकेन यः पुमान्।
मासमेकन्तु गङ्गायां समौ स्यातां नवा[6] समौ ॥"
अद्य [लम्बमान-शिरोऽवाग् (?) अवाक्शिरोलम्बमान] युगायुत-स्थिति-जन्य-पुण्य-विशिष्ट-पुण्य-प्राप्ति-कामो गङ्गातीरे स्थितिमहं[7] करिष्ये।

---

1. V. r. A. त्रि-वर्गगां।
2. V. r. C. वसेत्क्षति। 3. V. r. A. तत्तावितास्पर्शन।
4. V. r. C. निर्भय-प्राप्ति। 5. V. r. C. लम्बेन वाक्शिरा।
6. V. r. A. नरा (?)। 7. V. r. A. स्थितिरहं (?)।

अद्यैक-पाद्--करणक-युग-सहस्र-स्थिति-जन्य--पुण्य-विशिष्ट-पुण्य--प्राप्ति-कामो मासमेकं गङ्गा-तीरे स्थिति-महं[1] करिष्ये ।

ब्राह्मे—"लम्बेतावाक्-शिरा[2] यस्तु युग-कोटिं समाहितः।
श्रयेद् यथेष्टं गङ्गां यः स च तस्माद्विशिष्यते ॥"

अद्य [ लम्बमान-शिरोऽवाग् (?) अवाक्शिरोलम्बमान ] युग-कोटि-समाहित-स्थिति-जन्य-पुण्य-विशिष्ट-पुण्य--प्राप्ति-कामो गङ्गामहमाश्रये ॥

भविष्ये—"किं तस्य यज्ञ-दानेन किं जपैस्तपसाऽपि वा ।
षण्मासेनापि किं तस्य यो वै गङ्गां न सेवते ॥"

महाभारते—"पूर्वे वयसि पापानि कृत्वा कर्माणि ये नराः ।
पश्चाद् गङ्गां निषेवन्ते[3] तेऽपि यान्ति परां गतिम् ॥"

अद्य पूर्व-वयःकृत-सर्व-पाप-कम-नाश-पूर्वक-परम-गति-प्राप्ति-कामो गङ्गा-महमाश्रये ।

ब्रह्माण्डे—"गङ्गा-सेवापरस्येह दिवसार्धेन यत् फलम् ।
न तच्छक्यं प्रयत्नेन प्राप्तुं क्रतु-शतैरपि ॥"

अद्य बहु-क्रतु-शत-जन्य-फल-विशिष्ट-फल प्राप्ति-कामो गङ्गामहं सेवे ।

स्कान्दे—"अहो किं बहुनोक्तेन गङ्गा सेव्या नरैः सदा
नान्यत् संसार-वृक्षस्य[4] नाशकं मोक्षदायकम् ॥"

अद्य सांसारिक-दुःख-नाश-पूर्वक-मोक्ष-प्राप्ति कामो गङ्गामहं सेवे ।

नारदीये—"महापातकिनो मर्त्याः सेवन्ते यदि जाह्नवीम् ।
महापातक-पञ्चभ्यो मुच्यन्तेऽन्यस्य का कथा ॥"

अद्य पञ्च-महापातकादि-सर्व-[5]पातक-नाश-कामो जाह्नवीमहं सेवे ।

भविष्ये—"त्रि-रात्रं सप्त-रात्रं वा स्थिति-मात्रेण भक्तितः ।
गङ्गा-तीरे नरो यस्तु नरकं स न पश्यति ॥"

---

1, V. r. A. स्थितिरहं (?) । 2. V. r. A. लम्बेदवाक् ।
3. V. r. A. समाश्रित्य । 4. V. r. C. दुःखस्य ।
5. सर्व-पातक is omitted in C.

अद्य नरक-दर्शनाभाव-कामस्त्रिरात्रं सप्त-रात्रं वा गङ्गा-तीरे स्थितिमहं करिष्ये ।

नारदीये—"कलौ तत्-परम-ब्रह्म-प्राप्तये सत्वरं नृणाम् ।
गङ्गा-भजनमेवाऽऽहुर्महोपायं महर्षयः ॥"

अद्य पर-ब्रह्म-प्राप्ति-कामो गङ्गा-भजनमहं करिष्ये ॥

ब्राह्मे—"तिष्ठेद्युग-[1]सहस्रन्तु पादेनैकेन यः पुमान् ।
सेवते मासमेकन्तु गङ्गाम्भः स विशिष्यते ॥"

अद्यैक-पाद-करणक-युग-सहस्र-स्थिति-जन्य-पुण्य-विशिष्ट-पुण्य-प्राप्ति-कामोऽद्यारभ्य मासमेकं गङ्गाम्भःसेवनमहं करिष्ये ।

## अथ प्रायश्चित्त-प्रकरणम् ।

स्कान्दे—"प्रायश्चित्तानि दीयन्ते यत्र गङ्गा न विद्यते ।
यत्र गङ्गा महाराज प्रायश्चित्तन्तु तत्र सा ॥"

महाभारते—"चान्द्रायणं पराकं वा प्राजापत्यमथापि वा ।
प्रायश्चित्तानि दीयन्ते यत्र गङ्गा न विद्यते ॥"

पाद्मे[2]—"प्रायश्चित्तं परं तीर्थ-स्नानं महर्षिभिः कृतम् ।
किन्तु तीर्थे त्यजेद्धीरुर्मनसाऽप्यशिवां क्रियाम् ॥"

ननु मन्वादि-धर्म[3]-शास्त्रे प्रायश्चित्त-प्रकरणे[4] ब्रह्म-वधादि-पातके[5] प्रायश्चित्तत्वेन गङ्गायां शिव[6]-गोविन्दयोर्नाम च, तत् कथं [7]न विहितम् । तथा च

नन्दिकेश्वरे—"कोटयो[8] ब्रह्म-हत्याया अगम्या-गमनस्य च ।
सद्यः प्रलयमायान्ति महादेवेति कीर्तनात् ॥"

---

1. V. r. A. त्रि-युगानां
2. A. add. r. तथाच
3. V. r. C. धर्म is omitted.
4. V. r. C. प्रकरणम् ।
5. V. r. C. पातके is omitted.
6. V. r. C. गङ्गा-शिव- ।
7. V. r. A. नाम-कथनं ।
8. V. r. C. कोटिशो ।

स्कान्दे—"कृत[1]-पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैवं[2] शिव-संस्मरणं परम् ॥"

ब्राह्मे—"गोविन्दं संस्मरेद् यस्तु शाठ्येनापि सकृन्नरः ।
सर्व-पापैः प्रमुच्येत तत्-क्षणान्नात्र संशयः ॥"

ब्राह्मे—"अप्यन्य-चित्तः क्रुद्धोऽपि यः सदा कीर्तयेद्धरिम् ।
सोऽपि दोष-क्षयान्मुक्तिं लभेच्चेदि-पतिर्यथा ॥"

सत्यं, नहि लघु-कर्मणि-गुरु-कर्मणो विधानम् । यदाह विष्णुः—

"एनसि लघुनि लघूनि गुरुण्यपि च गुरूणि" प्रायश्चित्तानि इति शेषः ।

तथा ब्राह्मे—"पापकृद् याति नरकं प्रायश्चित्त-पराङ्मुखः ।
पापानामनुरूपाणि प्रायश्चित्तानि तद् यथा ॥"
तथा तथैव संस्मृत्य[3] प्रोक्तानि परमर्षिभिः ।
पापे गुरूणि गुरुणि स्वल्पान्यल्पे च तद्विदः ।
प्रायश्चित्तानि विप्रेन्द्रा जगुः स्वायम्भुवादयः ॥

तथा च स्कान्दे—

"पापे लघूनि लघुनि गुरूणि च गुरुण्यपि ।
प्रायश्चित्तानि दीयन्ते नान्यथा शुध्यति[4] नरः ॥"

इति वेद-दर्शनात् । गङ्गाया गरीय[5]स्त्वात् प्रायश्चित्तत्वेन[6] । निरूपिता गङ्गेति । एवं शिव-गोविन्दयोर्नाम्नस्तु विशेषः परमो मत[7] इति ।

( क्रमशः )

1. V. r. C. कृते ।
2. V. r. C. तस्यैकं ।
3. V. r. A. संस्मृत्या ।
4. V. r. C. शुध्यते ।
5. V. r. C. गयागीयस्तत्वात् ।
6. Extra reading in C. प्रायश्चित्ते ।
7. V. r. C. पूर्वस्यैव वक्तव्य इति ।

राज्ये न पुण्यपरमं हृदयं नराणां
पापानुवृत्तिरुदपादि मनःसु तेषाम् ।
स्वार्थे रतिः प्रतिपदं प्रतिभाति पूर्णा
नैकोऽपि हा प्रकृतिदुःखसुखे विवेकी ॥५२॥
दुःखानि वेदयितुमद्य जनोपकण्ठं
शीर्णस्वरेऽपि सति कण्ठतटे जनानाम् ।
नोत्सादनाय दयते हृदयं नु तेषां
तस्माद् विकारशतमाविरभूदकस्मात् ॥५३॥
चाण्डालमन्नमपि विप्रकुलप्रसूतै-
रास्वाद्यते सपदि सादरमद्य बुद्ध्या ।
हिंसासु शास्त्रविहितासु विरक्तचित्ता
मांसादि रासनसुखाय जनाः पचन्ति ॥५४॥
कामाय कम्रवनितामनुसन्दधानः
प्राणैः पणैस्तदुपभोगविधौ निषक्तः ।
धर्मप्रसङ्गमपि माङ्गलिकं विमुञ्चन्
पारत्रिकापकृतिमेव नरश्चिनोति ॥५५॥
उद्दण्डमाण्डलिकमण्डलदण्डभीत्या
नीत्या कथञ्चन विनीतमृदुप्रकृत्या ।
चौर्यादिपर्युषितमन्तरमुतकुलानां
स्वप्नेऽपि नेच्छति सनातनधर्ममार्गम् ॥५६॥
वाचा प्रचारयति पुण्यमयोपचारान्
आचारमात्मनि समञ्चति पापसारम् ।
वैडालकव्रतमनिष्टकरं परेषां
प्रायः प्रसारमुपयाति नृणां समाजे ॥५७॥
कर्मान्तरेऽप्यसति नित्यविधाववज्ञां
विज्ञोऽपि कालवशगः श्रयते दुरन्ताम् ।

सन्ध्यादिनित्यविधिसाधनपूतचेता
नो हन्त कोऽपि भुवि दृष्टिपथं प्रयाति ॥५८॥
ये पूर्वपूरुषकृतेषु समाजभीत्या
कृत्येषु जाग्रति धने शठतां श्रयन्तः ।
ते चोभयत्र निजकर्मकृतायशोभि-
र्मूढा जना मलिनिमानमुपाश्रयन्ति ॥५९॥
प्रत्यक्षमात्रमधियन्ति मितौ प्रमाणं
कर्मोद्भवं न सुखदुःखविधावदृष्टम् ।
जन्मान्तरं न नरको न च नापि च द्यौः
पूतं मखादि च मृषेत्यपि संगिरन्ते ॥६०॥
निःश्रेयसं मरणमेव भवे स्वभावात्
स्वर्गस्तु दिव्यवनितानुगतिप्रमोदः ।
स्रक्चन्दनादि-कमनीय-पदार्थसेवा-
सम्भूतमान्तरसुखञ्च जगद्गतानाम् ॥६१॥
व्याधिप्रकोप-रिपुशस्त्रकृतव्यलीकाद्
दैन्यादिसाधितमनोरथहानिदुःखात् ।
नान्यो विभाति नरको नयवेदिसिद्ध-
स्तत् किं वृथेन्द्रियविनिग्रहभूरियत्नः ॥६२॥
नात्मा शरीरमपहाय परोऽस्ति जन्तो-
श्चैतन्यमस्य किल भूतसमष्टिसृष्ट्या ।
ताम्बूलचूर्णखदिरादिसमन्वयेन
रागोऽधरे ननु यथा विलसत्यपूर्वः ॥६३॥
विप्राय गो-कनक-भूषण-रत्नदानात्
पुण्यं वदन्ति निजमर्थमवेत्य धूर्ताः ।
निर्वीर्यतामुपगता मतिमन्त एव
पातिव्रतं शुभफलं प्रथयन्ति लोके ॥६४॥

संसारिणां पुरुषकारवियोजितानाम्
अर्थागमाय सुकृतोक्तिविचारभङ्गौ ।
वेदानुगामिविविधव्रतपालनार्थं
मिथ्यैव मूढमनुजा विपथे भ्रमन्ति ॥६५॥
वाणिज्यमाचर गृहाण समोपचारं
विप्रादिभेदमपि विस्मर विश्वरागात् ।
वर्णाश्रमाचरितमङ्गगणेन क्लृप्तं
दीप्तं कुरुष्व तिमिराणि निहत्य चित्तम् ॥६६॥
वर्णास्त्रयः श्रुतिपदेषु गताधिकारा
नान्त्यस्तथा दुरभिसन्धिरयं द्विजानाम् ।
ईशः समः सकलमानुषजन्मदश्चेत्
कस्माद् विभेदमतिमानुषमेष कर्ता ॥६७॥
बाह्यं शरीरमविलक्षणमन्त्यवर्णे
धीचातुरी तुलनया क्वचन प्रकृष्टा ।
वेदोदितेषु शुभकर्मसु मार्मिकाणां
तत् किन्तु वेदमधिकृत्य महत्त्वचिन्ता ॥६८॥
पित्रोः पदाब्जपरिपूजनमस्तु किञ्चिद्
देवार्चना न फलिनी श्रुतिसम्प्रदिष्टा ।
केयं विमूढमनसां मृदि पादपे वा
पाषाणखण्डनिचयेऽपि च दैवबुद्धिः ॥६९॥
स्वर्गाभिधं पुरमितो यदि किञ्चिदुच्चै-
स्तत्र स्थितैर्मखहविः कथमस्तु पीतम् ।
दूरं जने व्रजति जीवनपोषणार्थं
पाथेयकल्पनमनर्थकमन्यथा स्यात् ॥७०॥
इत्येवमेव नवजल्पशतैः समाजः
स्वल्पीकरोति तमसाऽल्पधियां विवेकम् ।

आपातसुन्दरमनोऽनुगुणं विचारं
प्रायेण याति जनता भुवि निर्विकल्पम् ॥७१॥
एवं दशामुपगते परितः समाजे
किं वा विधेयमिति चिन्तयतो मनो मे ।
नो निर्णयं समधिगच्छति देवि पद्मे
तद्दीयतां मम विचारसहोपदेशः ॥७२॥
लोकवृत्तानुवृत्तात्मा पद्मां स्निग्धेन चेतसा ।
बोधयित्वा व्यथावीजं विरराम जनार्दनः ॥७३॥
इति श्रीकालीपदतर्काचार्यकृते सत्यानुभावे महाकाव्ये
कलिप्रभाववर्णनं नाम प्रथमः सर्गः ॥१॥

---

द्वितीयः सर्गः

इत्थं सर्वजगद्गुरुं स्थितिपरं दृष्ट्वा विकारं गतं
पद्मा च्छद्मविभेदनस्थिरमतिः कृत्वा स्मितं प्रावदत् ।
हे नारायण पारयन्नपि परस्तत्त्वार्थसिद्धिक्रमे
यन्मां पृच्छसि तद्धि गौरवपदं त्वत्पादपद्मोद्भवम् ॥१॥
सूताधिष्ठितवाजिराजिरयते यद् योग्यमार्गे गतिं
सोऽयं वाजिगणे गुणः किमु, गुणः सोऽयं स्थितः सारथेः ।
सौभाग्यं यदि मे वचःसु विलसेत्तत्रास्ति हेतुर्भवान्
सूरस्य प्रभयाऽरुणोऽपि जगतां व्याहन्ति घोरं तमः ॥२॥
प्रागल्भ्यं त्वयि सर्वगौरवमये शिक्षावचो मे ह्रिया
मौनं मानविलङ्घनादिव तथा दोषाय मे कल्पते ।
तस्मादेव गुरोरधीतविषयाः शुद्धयर्थमाम्रेडिताः
शिष्याणामिव मे वचांसि न कथं निर्दोषतां तन्वताम् ॥३॥
नित्यं मामनुमन्यसे प्रणयिनीमानन्ददानप्रिय-
स्तस्मादेव तव प्रभूतमहसो नासाद्यते वैभवम् ।

वाचां देव मया प्रवृत्तिसमये त्वत्पादपाथोभवे
सर्वाघक्षयसाधनार्थमधुना भूमौ नतिः साध्यते ॥४॥
आलोकः प्रभया यथा हि तमसां हन्ता गृहोद्भासक-
स्तद्वत्त्वं मम दोषराशिमनिशं हत्वा प्रदत्से मतिम् ।
अद्यापि प्रणयाभिमानरभसाद् गन्तुं कृपां तावतीं
त्वत्पादाम्बुजपूतरत्नकिरणे पीठे नतिः साध्यते ॥५॥
इन्द्राद्या विपदागमे तव पदं शान्तेः कृते वृण्वते
त्वन्नामस्मरणेन सर्वविपदो दूरं गता देहिनाम् ।
तत् केयं वद चातुरी सुचतुर प्राप्ता त्वया नूतना
तृष्णापीडनतो जलाधिपपुरी हन्ताधुना दुर्गता ॥६॥
पूर्वं यावदपादि लोकवलये धर्मस्य हानिः परा
तावत्तस्य विरक्षणाय भवता यत्नः समालम्बितः ।
धर्मस्य प्रथिमानमारचयितुं स्मृत्वा पुराणोद्यमा-
नद्यापि प्रतनुष्व विश्वमनघं केनापि पुण्यात्मना ॥७॥
वेदानां प्रलयाम्बुधौ प्रविलये मत्स्यस्वरूपं दधन्
तेषामुद्धरणं चकर्थ जगतां भव्योपकारक्षमः ।
नैते बाढमतोऽन्यथा भुवि जना यागादिसत्कर्मणां
वैधाचारपरायणाः शुभफलं लब्धुं क्षमेरन् परम् ॥८॥
'किं कार्यं किमकार्यमूर्ध्वमयनं कस्मात् कुतो वाप्यधः
श्रौतस्मार्त्तवचोभिरेव जनता ज्ञातुं क्षमा संसृतौ ।
वेदानां विलये विधेरवगमाभावेन नानाविधै-
रज्ञानाचरितैः स्खलद्विधिशतैः संसारिणां व्याहतिः ॥९॥
यत्त्वामीश कृपानिधिं मृदुधियो ध्यायन्ति दोषाकरं
लोकानां प्रलयप्रसाधनवशात्तन्मूढतायाः फलम् ।
काले जीवकृतैरसीमदुरितैः संसारविध्वंसनं
तत्रैवासि नियामको हि भगवन् भूतिस्थितिध्वंसकृत् ॥१०॥

तस्मादूर्ध्वमधःप्रलीनधरणी नीरात् समुत्थापिता
वाराहं वपुराकलय्य करुणामालम्ब्य देव त्वया ।
सृष्ट्वाऽभीष्टपदार्थसार्थमपरं पूर्वं यथासीत्तथा
संसारो नव एव दोषरहितः स्वेच्छाक्रमात् साधितः ॥११॥
चातुर्वर्ण्यजनिं विधाय मुखतो बाह्वोः पदादूरुतो
वर्णानां गुणकर्मभेदनियमानापाद्य सद्यः स्वयम् ।
संसारं नियतव्यवस्थमसुखं हन्तुं पदे वर्तय-
न्नेकस्त्वं निखिलेषु भासि कृपया लोकोपकारक्षमः ॥१२॥
वेदार्थानवगत्य विप्रनिवहा धर्मं यदातन्वते
यच्च क्षत्रगणाः कृपाणनिपुणा रक्षन्ति लोकानमी ।
वैश्या यच्च कृषिप्रधानविषयो लोकोपकारव्रताः
शूद्राणामपि शिल्पकादिघटना सर्वं प्रसादाद्धि ते ॥१३॥
यावद्दैत्यकुले हिरण्यकशिपुस्तेजोबलैरात्मनो
जित्वा देवगणानभूत् सुरपुराधीशो विशालोद्यमः ।
यस्यैश्वर्यकणः प्रमाणमभवद्दुःखे सुखे वा चिरं
देवानां त्रिदिवेऽपि का तनुभृतामन्यत्र वार्ता सताम् ॥१४॥
यस्यादेशवशात् सहस्रकिरणो नात्युष्णघृष्णिं वहन्
वाय्वानीतजलादिशैत्यविरतिव्यापारमात्रक्षमः ।
भाले पत्रविशेषकच्युतिभिया स्वेदं न धारामयं
ग्रीष्मेऽपि प्रततान शासनभयान्मुग्धाङ्गनानां मुहुः ॥१५॥
स्वर्णं बोधयितुं हिरण्यकपदव्याहारमात्रात्तदा
जीवानां यदलीकभीतिविकलं चेतश्चकम्पे चिरम् ।
तस्मादेव तदुग्रवीर्यविवृतिः शक्यानुमानाऽभवद्
नामांशादपि नामवाच्यविषयो बुद्धिं समाक्रामति ॥१६॥
प्रह्लादं निजमात्मजं हरिपदध्यानावधानक्षणं
श्रुत्वा वैरवशादवारितहृदो यस्यातिरोषः पुरा ।

तद्दोषादतिमानुषेण विधिना हन्तुं सुतं चेष्टितः
शैलक्षेप-विषान्नदान-जलधिक्षेप-द्विपोद्वेजनैः ॥१७॥
एवं दानववीर्यविद्रुतममुं भक्तं शरण्यो भवान्
प्रह्लादं परिभूतमानसरिपुं पातुं नृसिंहात्मना ।
भित्त्वासौ करजैर्हिरण्यकशिपोर्वक्षः स्रवच्छोणितै-
रन्त्रैरात्मविभूषणं विलुलितैश्चक्रे सुराद्यैः स्तुतः ॥१८॥
क्षीराम्भोनिधिमन्थनाय निहितं क्षौणीधरं मन्दरं
पृष्ठेकृत्य निमज्ज्य सागरजले कूर्मस्वरूपं श्रितः ।
कण्डूखण्डनलीलया क्षितिभृता पृष्ठे महाघर्षणं
को वान्यः सहतां विना भगवता विश्वोत्तरेणादितः ॥१९॥
तन्निश्वासगृहीतभूरिपयसामाकर्षणोत्सर्जनै-
र्ह्रासोच्छ्वासविधौ पयोधिसरितां नाद्यापि विश्राम्यतः ।
ये लोकातिगजन्मकर्मपरमा माहात्म्यलीलाश्रया-
स्तेषां श्वासविमोचनेष्वपि भवेल्लोकातिरिक्तं महः ॥२०॥
तस्मात् सागरमन्थनात् सुरगणैरासादि कल्पद्रुमः
पीयूषांशुरहं तथा च सुमहानुच्चैःश्रवा वाजिनाम् ।
मातङ्गान्वयनायकः सुरपतेरैरावतः कौस्तुभो
नानारत्नगणः सुधाढ्यकलसो देवारिभोग्या सुरा ॥२१॥
दुर्वृत्तासुरवञ्चनाविधिपरो यन्मोहिनीमायया
दत्त्वा मुग्धसुधां सुरेस्वसुरतां चक्रे सुरागोपनात् ।
पीयूषं छलतोऽपवार्य सुरया मुग्धासुरान् मोहयन्
तेष्वन्यां सुरतां च देव सुरतासौभाग्ययोगाय तत् ॥२२॥
शान्तिं कामपि संश्रिते चिरमथो लोके चरे स्थावरे ।
दैत्यानामधिपो बलिर्बलवतां श्रेष्ठोऽभवद् भूतिमान् ।
तेनार्ता भगवन्तमार्तशरणं देवाः स्तवैस्तुष्टुवु-
र्यावत्त्वं किल वामनाख्यमहसा तावद् बलिं बद्धवान् ॥२३॥

यावद् ब्रह्मभुजोद्भवा ननु धनुर्वेदे प्रतिष्ठां गता
दर्पाद्वृत्तविपर्ययं विदधतो भ्रष्टाः स्वजातिक्रमात् ।
तावत् स्वांसतटे निधाय परशुं शत्रुक्षये दुर्मदं
व्याजीकृत्य पितुर्वधं क्षितिभुजस्त्रिःसप्तकृत्वोऽवधीः ॥२४॥
हत्वा क्षत्रगणं तदीयरुधिरैरारभ्य नैकहृदां-
स्तेषु प्रेतपितुर्निवापसलिलैस्तृप्तिस्त्वया साधिता ।
तातादेशविशेषपालनकृते शीर्षं जनन्याः स्वयं
छित्त्वा किञ्चिदिवाद्भुतं त्रिभुवने शिक्षापदं स्थापितम् ॥२५॥
जित्वा सागरमेखलां स्वयमिलां निःशेषितक्षत्रियां
हित्वा निःस्पृहमीश्वरस्य गुरुता लोके समाशंसिता ।
शान्त्यर्थं तपसे विकीर्णमहसे सम्प्रार्थितः सागर-
स्तुभ्यं यत् तपसः पदं प्रतिददे तच्चाद्भुतं दीप्यते ॥२६॥
शिक्षाया ग्रहणे गुरोः पशुपतेः शास्त्रश्रुतेः शौर्यतो
गौरीपुत्रजिगीषया हिमवतः शृङ्गे शरं मुञ्चता ।
क्रौञ्चं रन्ध्रमकारि यद्धि भवता तेजोयशःसुन्दरं
तत्ते शाश्वतमैशमेव विभवं पूर्णात्मना शंसति ॥२७॥
त्रेतायां दशकन्धरे समुदिते रात्रिञ्चराधीश्वरे
धर्मोत्पातमये तपस्विजनताप्रध्वंसलीलाकरे ।
लोके धर्ममयध्वजं प्रथयितुं हन्तुञ्च पापोच्चयं
जातस्त्वं रघुवंशगौरवरवी रामाभिधानः श्रिया ॥२८॥
यज्ञे विघ्ननिवारणाय तपसामेकायनं गाधिजो
विश्वामित्रमुनिर्यदा दशरथं तातं तवाभिक्षत ।
तावत्त्वं महिमान्वितो मुनिमिमं मार्गेऽनुगच्छन् पुरा
सुन्दस्त्रीवधपौरुषेण जगतामाश्चर्यकृच्छैशवे ॥२९॥
तस्मादुत्तरतो मुनीश्वरमतो गत्वा विदेहान् भवान्
विश्वामित्रवशे स्थितः पशुपतेर्भङ्क्त्वा महत् कार्मुकम् ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| March, 1940 | १८६१-शकीये फाल्गुने २२श-वर्षस्य ११श-संख्या | Vol. XXII No. 11. |


## भारती-स्तुतिः

[ निबन्धकः—श्रीदुर्गामोहन-काव्य-स्मृतितीर्थः ]

या शक्तिः क्षितिपालये मतिमतां या भाति चित्ते सदा
या सर्वप्रकृतिर्यया स्थितिरहो मूर्त्तस्य या ज्ञानदा ।
नन्दन्ते पुरुषाश्चकासति यया सूर्यादयो ज्योतिषः
साऽष्टाभिः सह शक्तिभिर्लगतु नः कण्ठे सदा भारती ॥१॥
भो भोः पङ्कज ! साधु साधु भवता किन्नाम तप्तं तप
एतच्छ्रीचरणे जनैकशरणे क्रोडीकृते यत्त्वया ।
स्वान्तध्वान्तविलुप्तिकाममतिभिर्यल्लाभलोभोत्सुकै-
स्तप्त्वाऽनन्ततपोऽपि तैरहरहर्न प्राप्य सन्तप्यते ॥२॥
रम्भास्तम्भ-कदम्ब-कुम्भ-पटलैर्वाद्योद्यमैः सर्वदा
दिव्याङ्गी नगराङ्गना कलकलैः सङ्गीतसेवार्चनैः ।
नानाकेतनरत्नपूर्णसुषमामाङ्गल्यकोलाहलैः
शोभापूर्णगृहाङ्गने भगवती वाणी नरीनृत्यते ॥३॥

भाग्यं भाग्यमहो महोत्सवमयी सा चिन्मयी मृन्मयी
भूत्वाऽभूदुदितादृताद्दृतजनस्यैषालये सम्प्रति ।
भ्रातर्भ्रातरितस्ततस्तत इमामेह्येहि पश्यानिशं
भास्वन्मूर्तिमगाधभावमहतीं श्रीमन्मनोहारिणीम् ॥४॥
काव्योद्यानिकुञ्जभावकुसुमैरर्चन्ति यां भावुका
वीणातानमृदङ्गताललितैर्गीतैश्च यां गाथकाः ।
काञ्चीरत्नदुकूलहारवलयैर्भूषाः स्तवैः स्तावका
ब्रह्मानन्दविधायिनीं वयमिह ब्राह्मीं नुमश्चार्भकाः ॥५॥
भो भोः पश्यत दूरतः सुनयनस्नेहाम्बुना सिञ्चति
मातेयं दयमान-दीर्घनयना सर्वान् सुतान् नः स्वयम् ।
तां संपूज्य शुभे दिने सुमनसां मालायितैरात्मभि-
र्वन्दे मातरमित्ययं सुविधृतो मन्त्रः सदोच्चार्यताम् ॥६॥
चित्रं चित्रमिहास्ति किं यदि रसान् सङ्गत्य भृङ्गावली
लोभान्धा चरणे मनोऽभिरमणे भ्रान्त्या समालम्बते ।
दृष्ट्वैतच्चरणे च ते पुनरहो कान्तारविन्दोपमे
को वा भ्रान्तिमगान्न निर्णयविधौ सन्नेत्रयुक्तोऽपि सन् ॥७॥
हृन्मालिन्यविमोचनी भगवती वाणी जगद्रञ्जिनी
ब्रह्मास्याब्जवने विहारचतुरा श्वेतप्रभोद्भासिनी ।
विद्वन्मानसरञ्जिनी श्रुतिसुधावीणारवोल्लासिनी
वन्दे मातरमित्युदारवचनं श्रुत्वाऽनिशं हृष्यति ॥८॥
ध्यानेन यां यतधियो विजने निषण्णाः
स्वान्ते स्वके गततमःप्रसरे नितान्तम् ।
बालेन्दुरश्मिपरिशोभितभालपट्टां
पश्यन्ति सुन्दरतनुं विधिजां विधिज्ञाः ॥९॥
अब्जे निवेश्य चरणाब्जयुगं युगाद्या
वामेन पुस्तकमथापरकेण वीणाम् ।

हस्तेन मौक्तिकगणैर्ग्रथितां स्रजञ्च
संबिभ्रती मुकुलिताब्जपयोधराभ्याम् ॥१०॥
या श्वेतपद्मार्पितपादपद्मा करेण वीणां परिवादयन्ती ।
विराजतेऽशेषगुणैरतीता सा भारती पातु विमूढपुत्रान् ॥११॥
का भाति भूमौ सुरवन्दनीया का स्यात्तरी मोहनदीश्च तर्तुम् ।
मोहान्धकारे नयनोत्सवः का विष्णुप्रिया ब्रह्मसुता सदैव ॥१२॥
नानावनानीतसुगन्धिपुष्पैर्गन्धानुलिप्तैः सह बिल्वपत्रैः ।
छात्राः समभ्यर्च्य महामहेऽस्मिन्-स्त्वां भारते भारति ! संनमन्ति ॥१३॥
एह्येहि मातश्चरणारविन्दं सम्प्रार्थये ते विगुणोऽपि पुत्रः ।
दयात्मजे चेन् सकलेऽपि तुल्या प्रदर्शनीया करुणाप्रकाशैः ॥१४॥

---

# भ्रमण-विवरणम्

[ निबन्धकः—श्रीदुर्गादास-गोस्वामी ]

अहो वैचित्र्यश्चाभोगश्च जगतः ! यः पुनरुलूक इव कन्दरगतः सत्यपि भास्वरे सहस्रांशुकरे स्वकीयामावेष्टनीमेव वसुधेति विबुध्य, विपुलया मूढतया गगनस्पर्शिना च दम्भेन विधातुर्विविधवचित्र्याभोग-भाजः परमोदाररमणीयाया भुवः प्रत्याहृत्य लोचने, प्रत्यक्षदृश्यानपि विषयानपह्नुत्य, महिम्नश्च जगदीशितुर्विज्ञायाप्यविज्ञाय, स्वेनैव भावमण्डलेन परीतस्तिष्ठति, यत् सत्यं शोच्यः स वराको नूनमनुकम्पाभाजनमेव सर्वेषां जनानाम् । यावद्धि जनः स्वेनैव मोहाभिमानतिमिरेण कलुषितेक्षणस्तिष्ठति तावच्छायेव निःश्वासमलीमसे मुकुरे न मूर्च्छति भगवतो महिमावली तस्य हृदयदर्पणे । अतः खलु स्रष्टुर्महिम्नो दिदृक्षवः सदा स्मरन्ति शास्त्रवाक्य-मेतत्—

"तृणादपि सुनीचेन तरोरिव सहिष्णुना ।
अमानिना मानदेन कीर्तनीयः सदा हरिः ॥"

अपि च, एतदपि सत्यं यत् सर्वस्मिन्नेव देशे, काले, पात्रे च सुनीचतया न भवितव्यम्। "काले मृदुः कुसुमवत्, पविवच्च तीक्ष्णः"—अयमेव नियमः। नैतद् युक्तं यत् पारुष्यस्य प्रयोजनमात्यन्तिकमेव नास्ति, तथात्वे मृषा स्यात् कवेर्वचः, मुधा च मनुष्यत्वम्। यत आह—

"वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति॥"

एतदुक्तं भवति यत् प्रत्युपस्थिते प्रयोजने पारुष्यं कार्यं, परं सर्वथा विनयः प्रदर्शनीयः। विनयाद्धर्मं शान्तिञ्च लभते लोकः। अपि च, अविनीतस्य न कथमपि गोचरो भवति विश्वसृजो महिमजातं, न वा पुनरनुभूतो भवति तस्य मायाविनो लीलाप्रपञ्चः। पश्य, यो नाम जाल्मः स्वकेन जाड्यातिरेकेण मणिमुक्तामाणिक्यादिखचितस्य वितानस्येव संख्यातीतग्रहोपग्रहतारकेन्दुधूमकेतुच्छायापथनीहारिकादिज्योतिष्कमण्डलीपरिशोभितस्य नभसः सत्तां नाङ्गीकरोति प्रखररविकरोद्भासिते दिवाभागे, स यदि निशायामूर्द्ध्वं प्रहिणोति दृष्टिं तदा किं ग्रहादीनामशेषाणां वस्तूनां स्वनयनपथमागतानामस्तित्वमपलपितुं पारयति? न कथमपि। अपि तु, अगाधासीमानन्तस्य भूम्नः सन्निधौ विसृष्टावलेपभारो दीनं बिन्दुमिवात्मानं मन्यते, भक्तिश्रद्धार्द्रमानसश्च लोलुठ्यते विश्वपतेः पादपीठभूते धरणीतले। अपि च पश्य, यावद्धि कश्चिज्जनः स्वगेहस्य द्वारगवाक्षवातायनादिकमवरुध्य विमलाभिरिन्दुप्रभाभिरुद्भासितायां रजन्यामन्तर्बहिश्च तमसावृतोऽवतिष्ठते तावन्न जानाति बहिःस्थितायाः कौमुद्याः सत्तां, तस्याः शरीरमनःप्रह्लादिनीमपरिसीमां शक्तिञ्च। यदा तु स गोचरादगोचराद्वा द्वारादिकमपावृणोति तदैवानुभवति सत्तां, माधुर्यं, सौकुमार्यञ्च हिमांशुरश्मेः।

हन्त! सर्वं एव वयं यात्रिणो जगतीतलेऽस्मिन्! मोहतमिस्रेणावृतवीक्षणा वयं समन्ततो भ्रमामः। न जानीमहे वयं कुत आगताः, कथं वा भ्रमामः, क्व वा गन्तव्यमस्माभिः। अशेषलीलालयस्य परमकारुणिकस्य सर्ववीजभूतस्य परमपितुरुत्सङ्गात् परिभ्रष्टा मोहवशेन वयमितस्ततः परि-

भ्रमामः, न जानीमः कदा पुनस्तस्याश्रयमङ्कमारोक्ष्यामः। सर्वं वयमञ्जसा पान्था एव, सर्वदाऽप्रतिहतया गत्या भ्रमामः, भ्रमणान्तर्दशायामेव कदाचित् केनचित् पथिकेन सार्द्धं परिचयः क्षणिको वालापः प्रवर्त्तते। न जानीमहे कदा वास्या यात्रायाः परिसमाप्तिः स्यात्।

यातु, अवितथमेतत् यत्, यस्तावत् कृपणः पृथिव्यामस्यां न भ्राम्यति यथेच्छं, स वार्त्तामपि न जानाति वैचित्र्याभोगयोरस्याः। देशभ्रमणस्य फलं नानाविधं विबुधैर्बहुधा कीर्त्यमानमित्यलं पल्लवितेन। किं न श्रुतं भवद्भिः—

"यो न भ्रमति देशेषु न च संसेवते बुधान्।
तस्य सङ्कुचिता बुद्धिस्तैलबिन्दुरिवाम्भसि॥"

वस्तुतो देशभ्रमणं, बुधसंसेवनञ्च विना शिक्षापद्धतिरसम्पूर्णैव मनुष्याणाम्। अस्माकं भारतवर्षे कति नाम तीर्थानि सन्ति के तानि निरूपयिष्यन्ति? तीर्थदर्शनस्य तावदुद्देश्यं बहुविधम्। एकतो धर्मानुरागिणां चेतसि परमेश्वररतिविधानम्, अन्यतः स्वदेशेन साकं तेषां परिचयस्तेन च तेषां चेतसां पुष्टिः सम्प्रसारणमुन्नयनञ्च निर्मलानन्ददानद्वारेण विशदीकरणं, स्वास्थ्यसमृद्धिप्रभृतिसम्पादनं सर्वोपरि सामयिकमपि विषयविषधरज्वालाविस्मारणं तेन परमेश्वरपादपद्मे चात्मसमर्पणवासनाजननं वैराग्योत्पादनञ्च। अपि च, तत्तद्देशानामैतिहासिकवृत्तान्तभौगोलिकावस्थानज्ञानं, तत्रत्यलोकानां संख्याचारव्यवहारादि-वीक्षणमित्यादिप्राज्यं हितं मनोहारि च फलं देशभ्रमणस्य, नात्र कोऽपि विसंवादः।

यातु, अलं सर्वजनविदितस्य भ्रमणफलस्य व्याकरणेन। प्रकृतमेवानुसरामः। साम्प्रतिकमेवास्माकं भ्रमणं विवृणुमः। वयं त्रयः खृष्टीयावकाशे तीर्थदर्शनमुद्दिश्य स्वगृहान्निष्क्रान्ताः। समतलभूमिवास्तव्याः खलु वङ्गीया वयमनभ्यस्ताः समुच्चमृत्तिकास्तूपानाम्। अपि च, प्रधावति महता जवेन वाष्पीयशकटे प्रपन्नाः परमां प्रीतिमुभयतः श्रेणीबद्धां पर्वतमालामवलोकयन्तः। अपि च, विशालाः क्षेत्रभूमयः, अन्तरान्तरावस्थिता जनपदसमूहाः, प्रांशव-

स्तरवः, रौद्रोज्ज्वलाश्च प्रकृतेर्द्रव्यसम्भाराश्चिरं नो मायाप्रभावपिहितानिवाकुर्वन्। समन्ततश्च सद्यः कृत्तानि शस्यानि स्तूपीकृतानि राजन्ते स्म। वयन्तावन्महत्येव प्रत्यूषे गयाक्षेत्रं प्राप्तवन्तस्तत्र च कस्यचिदात्मीयस्य शरणमापन्नाः। ततः पितृकर्मकरणार्थमन्तःसलिलायां फल्गु-गङ्गायां स्नात्वा तत्रत्य-क्रियामपि समाप्याक्षयवटसविधे विष्णुगदाधरमन्दिरमासादिताः। लसच्चामीकरध्वजपताकं सुवर्णमयशिखरं प्रोत्तुङ्गं विष्णुमन्दिरं तन्मध्यस्थं विष्णुपादपद्मलाञ्छनञ्च विलोकयतां कीदृग् भावान्तरं जातमासीन्मनसि तद् गिरामविषय एव। परःसहस्राणां साधूनां पादस्पर्शसम्पर्कादमृतमयीवास्य धूलिकणिका। कति वा नामातीताः पुरुषास्तत्र गता भवेयुः, कति वा वर्तमानाः, कति वा तावदनागताः के तान् कार्त्स्न्येन जानन्ति। अत्रैव किल वङ्गरत्नभूतः श्रीचैतन्यदेवो विष्णुपादपद्मं दृष्ट्वा समाहित आसीत्। इहैव किल वङ्गालङ्कारः स्मार्तशिरोमणी रघुनन्दनः पितृकर्मकरणायागच्छत्। मन्दिरगात्रस्थानां शिल्पानां भास्कर्याणाञ्च नैपुण्यं कामनीयकञ्च किञ्चिदुपलब्धवन्तो वयं विस्मयविस्फारितचेतसो भूयो भूयः प्राचीनस्थपतिभास्करपाटवेन स्वान् गौरवान्वितान् मन्यमानाः परां निर्वृतिं प्राप्नुम। ततः सार्द्धक्रोशत्रयव्यवहितं भगवतो बुद्धस्य मन्दिरं द्रष्टुं गतास्तत्रत्यानि मनोहराणि मठचैत्यविहारनिकेतनादीनि प्रभूतानि दृश्यानि प्रत्यक्षीकृतवन्तः। तत्र पुरःस्थापितबृहद्घृतप्रदीपां विशालां बुद्धमूर्तिमन्याश्च तस्य मातृपितृकलत्रादीनां मूर्तीः, बोधिद्रुमं, बुद्धवापीं, सुबहूनि शिवलिङ्गानि, शङ्करभगवत्पादानां मठमित्येवंविधानि विचित्राणि पुष्कलानि च वस्तूनि नयनगोचरीकृतवन्तः। अत्रायमेव विषयो नः समधिकं दृष्टिमाकर्षत् यदेकस्मिन्नेव स्थले न-गण्येनैव व्यवधानेन शैववैष्णवसौगतधर्माणां प्रतिष्ठासीत्। अपि तु, एतदपि विस्पष्टं स्मरामो यत् तत्र गणपतिमूर्तिरप्यस्ति। किमनेन गाणपत्यधर्मोऽपि तत्र प्रादुरासीदित्यनुमातव्यमस्माभिः। न जानीमः किं वा प्रकृतं तथ्यम्। यद् भवतु, तद् भवतु, एतत्तु सुकरमनुमातुं यदेकदा तत्र भारतीयाः प्रधानभूता धर्माः सर्वेऽपि क्रमात् प्रादु-

रासन्। एतेन चास्य स्थानस्य पौराणिकं प्राधान्यं सुष्ठु विभाव्यते। महाराजादशोकात् प्रभृति नियतमद्यापि तिष्ठति सा पौराणिकी कीर्तिमाला विविधातीतघटनाविपर्ययपरम्परासाक्षिभूता।

ततो वयं वाराणसीं प्राप्ताः। तत्रत्यानामसंख्यकानां नानाविधदेव-मन्दिराणां दर्शनेन मनांसि नः सम्यग् विस्मयरसह्रदं गाहन्ते स्म। पुरातनीयं पुरी वाराणसी महाराजस्य दातृचूडामणेर्हरिश्चन्द्रस्य कालादद्यावधि स्वकीयेन गौरवेण माहात्म्येन च सर्वोपरि विराजते। इयमेव काशी तैलङ्गस्वामिभास्करानन्दप्रभृतीनां महापुरुषाणां लीलादर्शिनी। अस्यामेव नगर्यां महात्मा तुलसीदासः प्रथितां रामायणीं कथां प्रणिनाय। भगवान् तथागतोऽप्यस्यामेव प्रथमं बौद्धधर्मं प्रचारयामास। भगवाञ्छङ्कराचार्योऽपि अस्याः काशीश्वरान्नपूर्णामणिकर्णिकादीनां माहात्म्यवर्णने मुखर एवासीत्।* किं बहुना, सर्व एव भारतीया धर्माः, साधवः पुण्यश्लोका महापुरुषाः, कृतस्ना एवार्यदेवता वाराणस्यामिह सम्भूता आसन्। स्मरणातीतादेव कालादद्यापि भारतीया संस्कृतिधारा स्वच्छन्दमविच्छिन्नश्चात्र प्रवहति। कति नामात्र धर्माः, कति नाम राष्ट्राणि, कति नाम जातयः सम्प्रदायाश्च विपर्यस्तानि तदशक्यमेव वक्तुं मनीषिभिः।

वस्तुतो भारतवर्षेऽस्मिन् य एव प्रसिद्धिमात्मनः काङ्क्षति स्म, स एव वाराणसीं कर्मक्षेत्रं व्यधात्। यत् सत्यं, सर्वप्रकाराणां मानुषाणां शक्तिनिकषशिलेवासीदियं वाराणसी। सर्वे तत्र धर्मप्रचारकाः सन्यासिनो दण्डिनो व्रतिनः परमहंसाः परमभागवता मुमुक्षवः शिल्पिनो भास्कराः स्थापत्यविदः कलाकौशलनिष्णाता नृत्यगीतवाद्यपटवः परमकोविदा महाध्यापका अन्तेवासिनो राजानः प्रकृतयो धनिनो भिक्षवो विदुषो

* अस्यामेव नाटोरमहाराजस्य विधवा महिषी साध्वीललामभूता कृच्छ्रव्रता 'राणी भवानी'ति प्रथिताभिधाना मुक्तहस्तं प्रचुरतरवित्तादीनि प्रतिपादयन्ती नूनमद्यापि जीवति यशःशरीरेण।

वैधेया अभिजाताः साधारणा बाल-वृद्ध-वनिताः काणान्धपङ्गुमूकवधिर-क्षीवविकलाङ्गाः श्रेष्ठिनः क्रेतारो दस्यु-तस्कर-हिंसकाः पण्ययोषितः किं बहुना, सर्वप्रकाराद्भुतैर्मनुष्यसम्प्रदायैरध्युषिता तावदियं विचित्रा विपुला च नगरी। सर्वेषामेव भारतीयानां करदमित्रनृपतीनां भूस्वामिनां धनिकानाञ्च तत्र धर्मशालाः, कति वा नामाश्रमाः सन्ति, न तानि गणयितुं शक्यन्ते, किं बाहुल्येन, अन्नपूर्णानिकेतनं खल्वियं काशी। असंख्याना-मन्नसत्राणां सद्भावात् न कोऽपि तत्रोपवसति। अर्द्धवलयीकृताया-श्चित्रविलिखिताया इव गङ्गायास्तटभूमौ पवित्रा पुरी परमेण सौन्दर्येण परया च विभूत्या विहस्येवापरा नगरीर्विराजते मुक्तिप्रदायिनी। तत्र वयं भगवतः काशीविश्वेश्वरस्य शृङ्गारारात्रिकं दृष्ट्वा परमानन्दसन्दोहेन सुतरां जडीकृतबाह्यान्तःकरणप्रवृत्तयः सञ्जाताः क्षणमपि। अहो चारुत्वं नैपुण्यञ्चारात्रिकस्य काशीपतेः। न जातु स्मृतिरियं नश्चित्तपटादपसर्तुं शक्ष्यति। अत्र वयं कतिपयान्येव दिनानि प्रोष्य सर्वा देवताः, प्रेक्षणीयानि वस्तूनि च निरीक्ष्य, वाराणस्याः कियद्दूरवर्तिनि सारनाथनाम्नि स्थाने तावदशोकस्य कीर्तिस्वरूपं बौद्धविहारावशेषं भग्नस्तूपं, तत्रत्यसंरक्षणशालायां रक्षितानि नानाविधानि नानाकृतीनि च द्रव्याणि, महाचीनराजेन नवनिर्मितं जापानदेशीयचित्रकराङ्कितबुद्धजीवनाख्यानालेख्यमण्डितं बुद्धमन्दिरं, धर्म-शालाश्च दृष्टवन्तः। अद्यापि तत्र न सर्वाणि भूखण्डानि खानितानि भारता-धिपेन। तस्मिन् संरक्षणालये स्थितानां वस्तूनां कारुकार्याणि नः परं विस्मयं परमां मुदञ्च जनयामासुः। मायासम्मोहिता इव वयं तत्र मुहूर्त प्राचीने भारतवर्षे व्यचराम, कल्पनया च तात्कालिकीं दैनन्दिनजीवन-यात्रापद्धतिं सर्वतोमुखीं समृद्धिञ्च भावितवन्तः।

ततो वयं प्रयागक्षेत्रं गताः। तत्र हि गङ्गायमुनयोः पुण्ये सङ्गमस्थले स्नानं पितृकार्यादिकञ्च निर्वाह्य परिलघुचेतसस्तावदशोकदुर्गाभ्यन्तरं प्रविष्टाः। इदमेव दुर्गं किल मोगलनृपतेराकवरस्य करायत्तमभूदिदानीन्तु वृटिशराजाधीनं जातम्। अभ्यन्तरे चास्य वेणीमाधववासुकिप्रभृतीनां

देवानां व्यासवाल्मीकिदुर्वासःप्रभृतीनां मुनीनामक्षयवटनामकस्य च सुप्राचीनतरोरवस्थानं भवति ।

अत्रत्यमूर्तीनां घटननैपुण्यं सुतरां प्रेक्षणीयमेव जनानाम् । मनसि भूरिशः प्राचीनकारुशिल्पिनां दक्षतां प्रशस्य तद्देशवासित्वादात्मनश्च बहुमन्यमानाः स्तिमितदीपालोकोद्भासितादभ्यन्तरभागाद् वयं बहिर्निष्क्रान्ताः । पथि च महावीरं भारद्वाजाश्रममानन्दभवनादिकञ्च विलोक्य तस्मादेलाहावादनगरीं गतवन्तः । तत्र प्रधानधर्माधिकरणालयं तथान्यान्यपि द्रष्टव्यस्थानानि, गृहाणि वस्तूनि च द्रुतमवलोक्य तत्तद्वस्तूनां पुण्यामत्युज्ज्वलां स्मृतिं मानसपटे निधाय च स्वदेशं प्रत्यागतवन्तः ।

---

# विश्वासदेवी-कृता गङ्गा-वाक्यावली

[ निबन्धकः—डा० यतीन्द्रविमल-चतुर्धुरीणः ]

तथा च पाद्मे—"धर्म-द्रवं[1] ह्यपां वीजं वैकुण्ठ-चरण-च्युतम्[2] ।
धृतं मूर्ध्नि महेशेन यद् गाङ्गममलं जलम् ॥
तद् ब्रह्मैव न सन्देहो निर्गुणं प्रकृतेः परम् ।
तेन किं समतां गच्छेदपि ब्रह्माण्ड-गोचरे ॥"

तथा—"गङ्गा गङ्गेति यो ब्रूयाद्[3] योजनानां शतैरपि ।
नरो न निरयं याति किं तया सदृशं भवेत् ॥"

तथा स्कान्दे—"गङ्गायाः सदृशं तिष्ठेदन्यद् ब्रह्माण्डगोचरे ।
स गच्छेद् रौरवं विप्रा यावदाभूत-संप्लवम्[4] ॥"

यच्च प्रायश्चित्तत्वेन स्कन्द-पुराणादिषु दर्शितमिति[5], तत्तु एतेषां प्रायश्चित्तत्वेन प्रतिपादनमात्रं विवक्षितम् ।

---

1. V. r. C. द्रवी　　2. V. r. C. चरणाच्च्युतं ।
3. V. r. C. ये ब्रुयुः ।　　4. V. r. C. वदेदाहूतसंप्लवम् ।
5. V. r. C. स्कन्दपुराणादिष्वविवक्षितम् ।

तथा च शिष्टतन्त्रम्—

"तावन्न पातकं कर्तुं शक्ताः पातकिनो जनाः ।
गङ्गा यत्र भवेत् पुंसां प्रायश्चित्तं शिवोऽवदत् ॥"

किञ्च लोकानां[1] स्वातन्त्र्य्-वृत्त्यभावाद्वा बह्वायाससाध्य-प्रायश्चित्त-दर्शनात् प्रायः पाप-निवृत्ता[2] लोकाः । एतस्मिन् विहिते[3] सुख-साध्यतया अगम्या-गमनादिषु स्वेच्छया प्रवृत्तिरिति ।

तथा च स्कान्दे—यम-वाक्यं विष्णु-शर्माणं प्रति

"अल्प-साध्येऽपि[4] दुःसाध्यं श्रावयेत् सततं जने ।
यथा पापे न वर्तेत प्रायश्चित्त-भयादिह ॥
न निर्दिशेदल्प-साध्यं प्रायश्चित्तं नरे बुधः ।
तस्मिन् संक्रमते पापं कर्ता तु तद्विमुच्यते ।।"

इत्यादि-वचन-दर्शनादिति शेषः ।

स्कान्दे—"कृत्वापि दुस्तरं पापं मज्जेद्‌गङ्गाम्भसि प्रिये ।
तत्क्षणादेव तद् याति पापमुद्दिश्य मज्जनात् ।।"

पाद्मे—"नान्येन दह्यते लोके क्रिया नरक-गामिनी[5]
गङ्गाम्भसि प्रयत्नेन स्नातव्यं तेन मानवैः ।।"

अद्य कृतैतदमुक[6]-पाप-नाश-कामो गङ्गा-स्नानमहं करिष्ये । एतत्तु स्नानं सर्वात्मना सर्वभाव-शुद्ध्या वेदाः[7] सत्यमिति हृदये विनिधार्यान्य-मानसं विहाय गङ्गां ध्यायन् नारायणं स्मरन् गङ्गायामेतत्स्नानादेतत् पापं मे यास्यतीति निश्चित्य स्नायात् । "भावानुरूप-फलदा गङ्गा सर्व-जगद्धिता" इति वेद-दर्शनात् । तथा स्कान्द-भविष्ययोः—

---

1. V. r. नोपनां(?)
2. V. r. C, निरता ।
3. V. r. C. विहित ।
4. V. r. C. हि ।
5. V. r. C. दायिनी ।
6. V. r. C. अथैतदमुक ।
7. V. r. C. वेदः ।

"स्नानमात्रेण गङ्गायां पापं ब्रह्म-वधादिकम् ।
दुराधर्षं कथं याति चिन्तयेद् यो वदेदपि ॥
तस्याहं प्रददे पापं कोटि-ब्रह्म-वधोद्भवम् ।
स्तुति-वादमिमं मत्वा कुम्भी-पाके महीयते ।
आकल्पं नरकं भुक्त्वा ततो जायेत गर्द्दभः ॥

तथा च व्यास-संहितायां विष्णु-वाक्यम्—

"उत्क्षिप्य हस्तौ वक्ष्यामि शृणुध्वं मे[1] सुरासुराः ।
सन्देहो नैव कर्तव्यो गङ्गायां सर्व-कर्मसु ॥"

इति शिवादि-वचन[2]-दर्शनात् अन्यथा-भावं वर्जयेत् ॥

यच्च याज्ञवल्क्योक्तम्—

"प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतोऽव्यवहार्यश्च[3] सर्व-वेदेषु दृश्यते ॥"

तत्तु बहुपुराणैक-वाक्यतया सर्व-पुराण-विरोधाच्च गङ्गेतर-प्रायश्चित्तेषु बोद्धव्यम् । तत्रापि च पाप-विशेषेषु बोद्धव्यम् । तथा पाद्मे—

सकृद् गङ्गाम्भसि स्नातः पूतो गाङ्गेय-वारिणा ।
नरो न निरयं[4] याति अपि[5] पातक-राशिकृत ॥
व्रत-दान-तपोयज्ञाः पवित्राणीतराणि च ।
बिन्दोरेकस्य गङ्गाया न समानि इति श्रुतिः ॥"

भविष्ये—"ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा पञ्च-पातकी ।
सर्वतो निष्कृतिं याति गङ्गा-स्नानान्न संशयः ॥"

वन-पर्वणि—"अलक्ष्म्या किल संयुक्तो वृत्रहन्ता शचीपतिः ।
आप्लुतः सर्व-पापेभ्यो गङ्गायान्तु स मुक्तवान ॥"

---

1. V. r. C. शृणु सर्वे । 2. वचन is omitted in C.
3. V. r. C. व्यवहार्यं तु । 4. V. r. A विलयं ।
5. V. r. अति ।

इति पुराण-दर्शनात्। शिव-वचन-स्वरसाच्चातिदेशिकब्रह्म-वधादावप्येतत् प्रायश्चित्तमिति शङ्का त्याज्येति।

स्कान्दे—अद्य कृतैतदमुक-पाप-नाश-कामो गङ्गायां स्नानमहं करिष्ये।

"यत्र गङ्गा महाराज प्रायश्चित्तन्तु तत्र सा।" इति महाभारत-वचनादित्यर्थः[1]। चान्द्रायण-व्रत-नाश्य-पाप-क्षय-कामो गङ्गायां स्नानमहं करिष्ये। एतत् स्नानं सर्वात्मना सर्व-भाव-शुद्ध्या कार्यम्। यदुक्तं प्रायश्चित्त-प्रकरणे पाद्मे[2]—

"प्रायश्चित्तं चरेद् यस्तु वाङ्मनः-काय-कर्मणा।
स प्राप्नोति शुभाल्लोँकान् देव-गन्धर्व-सेवितान्॥"

एवं प्राजापत्य-व्रत-नाश्य-पराक-व्रत-नाश्य-पाप-क्षय-काम इति वाक्यम्। अन्यच्च, गङ्गा-स्नानात् पापमेतद् यास्यतीति मत्वा अधर्मे मतिस्त्याज्या। यतोऽनया बुद्ध्या अधर्म-मात्रेणातीव पाप-सम्भवात्। तथा च पाद्मे—

"न तीर्थे पातकं कुर्यान्न च तीर्थोपजीवनम्।
तीर्थे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः।
दुर्जरं पातकं तीर्थे दुर्जरश्च प्रतिग्रहः।
तीर्थेषु दुर्जरं सर्वमेतत् सर्वं ततो व्रजेत्॥"

यद्वा उक्तं[3] ब्रह्माण्डे—"अन्य-स्थाने कृतं पापं गङ्गा-स्नानाद्विनश्यति॥"

एतत्तु प्रसङ्गात् सकृत्[4] कृत-पापे बोद्धव्यमिति तात्पर्यार्थः। एवं सर्व-पापमुद्दिश्य पाप-क्षयार्थं स्नायात्। श्रद्धा-भक्ति-पुरःसरमेव सर्वत्र विशेष-फलम्। अत एव श्रद्धा-भक्त्योर्विशेषत्वेनावश्यकता इति स्मृतिः। शास्त्रार्थे तथेति प्रत्ययः श्रद्धा। उपास्यतया निश्चयो भक्तिः कैश्चिदुपासनाप्युच्यते॥

अथ कृत-कृत्य-प्रकरणम्।

ब्राह्मे—"गङ्गां संस्मृत्य यस्तिष्ठेत्तस्य कार्यं न विद्यते।
कृत-कृत्यः स वै मुक्तो जीवन्मुक्तो भवेन्नरः॥

---

1. इत्यर्थः omitted in C.
2. V. r. C. पद्म-पुराणे
3. V. r. C. यच्चोक्तं
4. V. r. C. सकृत् is omitted.

गङ्गा-मज्जन-शीलस्य गङ्गा-तीरनिवासिनः ।
अर्चां कृत्वा यथान्यायमश्व-मेध-फलं लभेत् ॥"

अद्याश्व-मेध-यज्ञ-जन्य-फल-सम-फल-प्राप्ति-कामो गङ्गा-तीरनिवासिनमहमर्चयिष्ये । गङ्गा-मज्जन-शीलस्यार्चनेऽप्येतदेव फलम् । एतत्तु केवल गङ्गोपसेविनो बोद्धव्यम् । महाभारत-पाद्मयोः—

"महापातक-संख्यानि यानि मे सन्ति जाह्नवि ।
गोविन्द-द्वादशीं प्राप्य तानि मे हर जाह्नवि ॥"

एतत्तु स्नान-पूर्वकं पवित्रः सन् निवेदयेत् । गोविन्द-द्वादशी फाल्गुन-शुक्ल-द्वादशी ।

अथ मृत्यु-प्रकरणम् ।

स्कान्दे— "गङ्गायां मरणान्मुक्तिर्नात्र कार्या विचारणा ।
पर-ब्रह्म-स्वरूपिण्यामित्याह जगतां प्रभुः ॥
गङ्गायां त्यजतः प्राणान् कथयामि वरानने ।
कर्णे तत् परमं ब्रह्म ददामि मामकं पदम् ॥"

इति स्कन्द-पुराण-वचन-दर्शनात् सर्व-दर्शन-दर्शनाच्च[1] गङ्गायां मरणान्मुक्तिरिति ज्ञानान्मुक्तिरिति[2] अविरोधी पदार्थः । यत्तु[3] पुराणान्तर-स्मृत्याऽन्यत्र[4] ब्रह्म-लोकादि-गमनं तत्तु कामनासु बोद्धव्यमिति पारस्करः ।

यच्च,—"नाभुक्तं क्षीयते कर्म कल्प-कोटि-शतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥"

अस्यायमर्थः । अधर्मादिकस्य भोगादेव क्षयो भवेत् । क्षय-कारणमेवात्र भोगः । अन्यथा ब्रह्म-बधादीनां प्रायश्चित्त-विधायक-धर्म-[5] शास्त्राणां वैयर्थ्यापत्तिः स्यात् ।

---

1 V. r. C. ज्ञानान्मुक्तिरिति सर्व-दर्शनाच्च
2. V. r. C. ज्ञानान्मुक्तिरिति is omitted
3. V. r. C. बहु ।
4. V. r. C. स्मृत्यादन्यत्र
5. V. r. C. धर्म not found

तथा—"ज्ञानाग्निः सर्व-कर्माणि भस्मसात् कुरुतेऽर्जुन ।"

इति वाक्यैकवाक्यतया गङ्गा-मरणान्मुक्तिरित्यविकल-पदार्थः ।

तथा च भविष्ये—"कृमि-कीट-पतङ्गाद्या ये मृता जाह्नवी-जले ।
कूलात् पतित-वृक्षाश्च तेऽपि यान्ति परां गतिम् ॥"
"गङ्गायास्तु जले मोक्ष" इति विष्णु-पुराणम् ।

स्कान्द-मात्स्ययोः—"ब्रह्मादि-देव-लोकानां मुक्तेश्च प्राप्ति-कारणम् ।
गङ्गैव परमो हेतुः कलि-काले विशेषतः ॥"

भविष्ये—"गङ्गा-जल-स्वरूपेण तत्र ज्ञानं व्यवस्थितम् ।
तस्मात्तज्जल-सेवा तु कर्तव्या मोक्ष-काङ्क्षया ॥"

ब्रह्माण्डे—"प्रसङ्गेनापि यैर्गङ्गा मोक्षदा त्ववगाहिता ॥"

भविष्ये—"ब्रह्म-विष्ण्वादि-देवानां लोकानाप्नोति मानवः ।
ज्ञाने भक्त्या तु गङ्गायां[1] मरणान्मोक्षमाप्नुयात् ॥"
पुरुषः[2] कामनायामेतेषां लोकानाप्नोतीति विशेषः[3] ।

तथा— "या गतिर्योग-युक्तानां[4] या गतिर्योगिनामपि ।
ज्ञान-विज्ञान-निष्ठानां सा गङ्गायां मृतस्य च ॥
ज्ञानतोऽज्ञानतो वापि कामतोऽकामतोऽपि वा ।
गङ्गायान्तु मृतो मर्त्यो मोक्षं स्वर्गञ्च विन्दति ॥"

इति ब्रह्म-पुराण-वचनाच्च[5] पुरुषेच्छया[6]-कामना-विशेषेषु स्वर्गादिरिति ।

ब्रह्माण्डे—गाङ्गेये[7] ।
"गङ्गायां ज्ञानतो मृत्वा मुक्तिमाप्नोति मानवः[8] ।
अज्ञानाद् ब्रह्म-लोकन्तु[9] याति नास्त्यत्र संशयः ॥"

---

1. V. r. C. ज्ञानेन भक्त्या गङ्गायां 2. V. r. A. पुरुषेच्छा
3. V. r. C. शेषः । 4. V. r. C, मुक्तानां
5. V. r. A. ब्रह्मपुराण-वचनदर्शनाच्च 6. V. r. A. पुरुषेच्छा
7. V. r. C. ब्रह्माण्ड-गाङ्गेये 8. V. r. A, पूरुषः
9. V. r. C. ब्रह्मणो लोकं

अज्ञानात्[1] कामनया[2] मरणात्। "कणे तत् परमं ब्रह्म कथयामि वरानने" इति शिव-वचन-स्वरसादित्यर्थः।

भविष्ये— "अपि योजन-पर्यन्ते गङ्गां स्मृत्वा तनुं त्यजेत्।
वैवस्वतोऽपि तस्यार्घ्यं दत्त्वा स्वर्गं[3]प्रयच्छति॥"

गाङ्गेये— "अर्धोदकेन गङ्गायां दशन-स्पर्शनादिभिः[4]।
अर्धोदके तु[5] गङ्गायां म्रियतेऽनशनेन यः॥
स याति न पुनर्जन्म ब्रह्म-सायुज्यमेति च[6]॥"

अर्धोदकं चरणान्नाभि-पर्यन्तम्[7]। अनशनेन व्रतेन।

कौर्मे— "यः सर्व-पाप-युक्तोऽपि पुण्य-तीर्थेषु मानवः।
नियमेन त्यजेत् प्राणान् मुच्यते सर्व-पातकैः॥"

'नियमेन' संयतः[8] सन् भाव-शुद्धया संकल्प-पूर्वकेणेत्यर्थः। एतत्तु न[9] गङ्गायां दर्शन-स्पर्शनादिभिः पाप-क्षयात्, पाप-क्षयार्थं मरण-संकल्पस्य वैयर्थ्यापत्तिः स्यात्। तस्मात् पाप-क्षय-कामनया स्नात्वा मरणेच्छा चेत् तदा यथेच्छ-कामनया तनुं त्यजेदिति सर्व-सम्मतोऽयं पक्षः।

नरसिंह-पुराणे—

"जल-प्रवेशे चानन्दं प्रमोदं वह्नि-साहसे।
भृगु-प्रपाते सौख्यन्तु रणे चैवातिनिर्मलम्॥
अनशने[10] मृतो यश्च स गच्छेत्तु त्रिपिष्टपम्।
क्रतुयाजी नाक-पृष्ठमग्निहोत्री च निर्वृतिम्॥

---

1. C. Extra reading गङ्गायां 2. V. r. A. कामनायां
3. V. r. C. दत्त्वार्घ्यं तस्य स्वर्गं
4. V. r. C. First half is omitted
5. V. r. A. अर्द्धोदकेन 6. V. r. C. मेव च
7. V. r. C. अर्धोदकं...पर्यन्तम् omitted
8. V. r. A. संयुतः 9. V. r. C. न omitted
10. V. r. C. अनशनेन म्रियेत यस्तु

तडाग-कूप-कर्ता च लभते पौष्टिकं द्विज ।
सुवर्णदाता[1] सौभाग्यं लभते तु महातपाः[2] ॥
हिरण्य-गो-प्रदानेन निरहङ्कारमाप्नुयात् ।
भू-दानेन तु शुद्धेन लभते शान्तिकं पदम् ॥
गो-प्रदानेन तु स्वर्गं लभते निर्मलं[3] नरः ।
अश्व-दाने महापुण्यं कन्या-दानेन मण्डलम् ॥
द्विजेभ्यस्तर्पणं कृत्वा दत्त्वा वस्त्राणि भक्तितः[4] ।
श्वेतन्तु लभते स्वर्गं यत्र गत्वा[5] न शोचति ॥
कपिला-गो-प्रदानेन परमार्थे महीयते ।
एकान्न-भोजी यो मर्त्यो नक्त[6]-भोजी च नित्यशः ।
उपवास-त्रिरात्राद्यैः शान्तः स्वर्गे सुखी भवेत् ॥

* * * *

यावत् स्वर्ग-तरङ्गिणी हर-जटा-जूटान्तरालम्बते
यावद्विश्व-विकाशि-विस्तृत-करः सूर्योऽयमुज्जृम्भते ।
यावन्मण्डलमैन्दवं वितनुते शम्भोः शिरोमण्डनं
तावत् कल्पलतेयमस्तु सफला देव्याः सतां श्रेयसे ॥
कियन्निबन्धमालोक्य श्रीविद्यापति-सूरिणा ।
गङ्गा-वाक्यावली देव्याः प्रमाणैर्विमलीकृता ॥

इति समस्त-प्रक्रिया-विराजमान-दान-दलित-कल्पलताभिमान-भव-भक्ति-भावित-बहु-मान-महामहादेवी-श्रीमद्-विश्वासदेवी-विरचिता गङ्गावाक्यावली समाप्तेति ।

---

1. V. r. C. दायी
2. V. r. C. सुमहायशाः
3. V. r. C. निर्मलं लभते
4. V. r. C. शक्तितः
5. V. r. C. गङ्गा
6. V. r. C. नक्त

# पर्वतपारम्यम्

( पूर्वानुवृत्तिः )

[ निबन्धकः—सा० भू० कृष्णमूर्ति-शास्त्री ]

निकुञ्जानां पुञ्जा भ्रमरनिकुरुम्बैर्निबिडिता
द्विजैर्नानावर्णैः श्रुतिमधुरगीतैस्समुदितैः ।
अजस्रं कंप्राग्राः स्रवदुदकधारार्दितपदा
गुहाद्वाराण्यद्रिप्रवर ! भवदीयाः पिदधते ॥३१॥

गुहागेहं मत्तद्विपशतपृथक्स्थित्यनुगुणं
लताकुञ्जोद्भ्वत्सुषममपि धीरैकसुगमम् ।
प्रतिध्वानैर्भीतिप्रदमजगरैश्चाद्रिसदृशैः
सरित्स्रोतःपातैर्मुखरमधितिष्ठन्ति हरयः ॥३२॥

सरो रम्यं हंसावलिदलितराजीवमभितः
परिष्वक्ता वेद्यः फलभरविनम्रद्रुविटपैः ।
समुत्प्लुत्य स्वैरं हरिणपृथुकानां विहरतां
गणैः पूर्णा राजन्त्यधिगिरि गुहाभ्यन्तरधरम् ॥३३॥

पृथक्स्थास्तूनूर्ध्वं त्वयि भृशमसक्तानिव सतः
समेषां तन्वानानुपविशदिभभ्रान्तिमसकृत् ।
समीक्ष्य ग्रावौघांस्तव शिखरिराज ! ध्रुवमिमे
निपत्याऽऽग्नोरन वा किमिति, मतिमाबिभ्रति जनाः ॥३४॥

महौषध्यो बह्वयः कटकभुवि रूढास्तव गिरे !
जरामृत्युव्याधिप्रशमनसमर्थप्रकृतयः ।
न बुध्येरन्सर्वे परमपि तु पारम्यमवनौ
ध्रुवं तासां संविद्रत इव महान्तः कतिपये ॥३५॥

महोग्रप्रस्पर्धिस्तनवनसुमस्रक्सुमधुराः
शबर्यः पर्याप्तं सुरतसुखमायान्ति निभृतम् ।
ततं नक्तं ज्योतिर्व्रततिततिविद्राविततमः-
प्रचारं त्वद्रन्ध्रोदरवरमुपाश्रित्य दयितैः ॥३६॥
स्फुरद्रत्नोद्रिक्तद्युतिनिकरपूराङ्कुरहरित्-
समुन्नम्रक्रूरोरगवरशिरःकम्रशिखराः ।
पटीराः कान्तारोदरतिमिरसंहारचतुराः
सदा दीपस्तंभश्रियमचल ! बिभ्रत्यनुपमाम् ॥३७॥
समावृत्य स्कन्धैरजगरशरीरोरुगुरुभि-
र्भृशं द्राघीयोभिः सविधमुपयातान् वनमृगान् ।
ग्रसन्ते मांसाशाः कतिचन महान्तः क्षितिरुहाः
परीता दुर्दर्शैः शिखरिभिरिवास्थ्नां समुदयैः ॥३८॥
उदग्रक्षुत्क्षामाः कतिचन तरक्षुप्रभृतयः
स्फुलिङ्गानक्षिभ्योऽसकृदिव वमन्तोऽमितरुषा ।
निशीथिन्यां सत्त्वा विपिनभुवि निर्वर्त्य मृगयां
स्वपन्त्यह्नि च्छायाद्रुमतलमुपाश्रित्य निभृतम् ॥३९॥
वहन्तो माद्यन्तस्त्वदुपघनतौल्यं कतिपये
द्विपा वप्रक्रीडां नयनकमनीयां विदधते ।
तरूनुन्मथ्नन्तः कतिचन समूलं खरदनै-
श्चरन्ति स्वच्छन्दं वनभुवि करेणुप्रणयिनः ॥४०॥
अदृष्टात्मानस्त्वत्पदविपिनतोऽन्यत्र जगति
स्फटाभिः प्रोच्चण्डा हतिरतरगात्रा विषधराः ।
जयन्त्यद्यापीति क्षितिधर ! कतिभ्यश्चिदसकृद्
भुवद्भ्यः सन्दृश्य स्वयमिह वयं संशृणुमहे ॥४१॥
समुन्मीलन्मल्लिप्रसवसरदिन्दिन्दिरपुर-
न्ध्रयुपक्रान्तश्रोत्रामृतरुतसमाध्मातहरितः ।

वनान्ताः प्रत्यग्रद्रुतकनकलिप्ता इव दृशो-
श्चकास्त्यस्तक्ष्माधरनिपतदर्कद्युतिभृतः ॥४२॥
शिरस्यग्निं बिभ्रत्तरुनिकरसङ्घर्षजनुषं
समुद्गच्छद्रोचिःकबलितविषूचीनतमसम् ।
अहिंस्रस्त्वं मूर्त्या परमनुकरोषि स्फुटतरं
श्रुतं शश्वत्खण्डान्तरविलसदग्निक्षितिधरम् ॥४३॥
क्वचिच्छुभ्रैरभ्रैः क्वचन परिपिङ्गप्रततिभि-
र्हिमाद्रिं हेमाद्रिं युगपदनुकर्तुं प्रभवसि ।
अरण्यान्या वन्ध्यं कलयसि च विन्ध्यावनिधरं
त्वदीयं सौन्दर्यं विलसति हि दूरे कविगिराम् ॥४४॥
महत्याः पङ्क्त्यास्ते बहुविषयविश्रान्तवपुषः
प्रथन्ते विच्छेदा द्विपनियुतदघ्ना वटतटाः ।
अधस्ताद् द्रष्टॄणां सपदि बत मूर्धभ्रमकृतो
दधानाः शार्दूलैः परिवृतमरण्यं धृतिहरम् ॥४५॥
किरञ्ज्योत्स्नासारानुपरि तव निष्टप्तरजत-
द्रवस्रोतःकल्पानमृतकिरणोऽयं निजकरैः ।
प्रकृत्या श्रीमन्तं कलयति भवन्तं शिवगिरे-
रखर्वं गर्वं द्रागुद्दलयितुमयत्नेन निपुणम् ॥४६॥
निरुन्धानं वर्त्म त्वदवयवमेकं शिखरिणं
विदार्य द्राघिष्ठं निरमिमत रन्ध्रं कतिपये ।
व्रजन्त्येतेन श्रीफणिपतिपुरं धूमशकटाः
क्षमाभृत्त्वं द्रुह्यत्स्वपि बत विमुक्तं न भवता ॥४७॥
क्षमामाबिभ्राणा अपि मृगवलोद्विग्नहृदया-
श्चरन्तः सत्पक्षैरुपरि दृढशाखाप्रणयिभिः ।
द्विजाः संभूयोच्चैः शिखरमधिरोहन्ति सुधियो
भवेत्तेषामैक्यं यदि जगति किं वा न सुलभम् ॥४८॥

द्विजा मूर्धानं ते क्षितिधर ! डयन्तेऽद्य परितः
समिन्धानं भिन्दानमिव दिवमभ्रौघसुभगम् ।
सजातीयानस्मान्निह भुवि विसृज्य द्रुततरः
सदाऽन्योन्यद्रोहप्रसितमतयो हि द्वि-जनयः ॥४९॥
अधस्तात्पश्येयं यदि शिखरमारुह्य परितो
निरुर्मिर्भायान्मे जलधिरपि नीलास्तरणवत् ।
तथा दीप्येरंश्च प्रवरसरितो भूमिफलके
कृता वक्राकारा द्रुतरजतरेखा इव गिरे ॥५०॥
सहस्रं सत्त्वास्त्वां वितरणिनमाश्रित्य सुचिरं
प्रपुष्टाङ्गाः प्राणन्त्यपरिमितहर्षानुभवतः ।
क्षमायां निम्नायां धरणिधर ! नैवं तनुभृता
प्रकृत्या तुङ्गानां श्रयणमतिसौख्यं वितरति ॥५१॥
प्रकल्पन्ते हिंस्रा अपि विपिनसत्वा बहुविधाः
परिष्कारायैव प्रबलतिमयोऽब्धेरिव गिरे ।
यदीमान्नाव्यास्त्वं जगति नहि भव्यं जनिमतां
सतां रक्षारीतिर्विलसति हि लोकोत्तरतरा ॥५२॥
अभीक्ष्णं संरक्षणं निरुपमकृपस्त्वं तनुभृतां
सरिद्भिः पुण्याभिर्विदधदवनीभृत्परिवृढ !
श्रितानामानन्दं जनयसितरामत्र तु वयं
विचार्याप्याश्चर्यं मनसि कलयामो न किमपि ॥५३॥
विशीर्णानां श्रीणां प्रतिसुभगभावं समुदयः
समिन्धानां कम्रः श्रयति परिणम्रस्तव तनुम् ।
अखर्वं त्वं गर्वं धरसि यदि दुष्येर्न च ततः
प्रकाशं किं वह्नेः स्थगयितुमलं धूमप्रटलः ॥५४॥
निवेद्य स्वोच्छिष्टं फलसमुदयं भक्त्यतिशयाज्
जगाद्धन्याम्य श्रीरघुपरिवृढायातिजरठा ।

परां मुक्तिं प्रापन्मुनिवरदुरापां सपदि या
तवाध्यासाच्चक्रे गिरिवर ! वनं सापि शबरी ॥५५॥
समुत्तुङ्गं शृङ्गं तव समधिरुह्यानिलसुतः
पुरं लक्ष्यीकुर्वन् दशवदनदोर्भिः समवितम् ।
अकूपारं तीर्त्वा जनकतनुजानन्दमकरोत्
तदङ्घ्रिस्पर्शेन त्वमपि कृतकृत्यः समभवः ॥५६॥
भवत्प्रत्यन्तोर्वीधरपरिसरारण्यमनिशं
परिष्कुर्वञ्छास्ता हरिहरसुतः सर्वजगताम् ।
चिरस्य स्वग्रामानवति करुणापाङ्गवलनै-
स्त्वमेवैको भाग्यं परमिदमलब्धाः शिखरिणाम् ॥५७॥
पुरा विन्ध्याद्रिं यः स्वमहिमविशेषान्न्यगकरोत्
क्रुधा वातापिं यो जठरदहने दैत्यमजुहोत् ।
अगस्त्यः सोऽपि त्वां सततमधिशेते मुनिगणै-
रहो ! माहात्म्यं ते जगति गदितुं कः प्रभवति ॥५८॥
मया दृष्टा सीतेत्यनिलसुतवाक्यश्रवणतः
कपीन्द्रा माद्यन्तो दधिमुखमनादृत्य तरसा ।
बभञ्जुः स्वैरं यत्त्वयि समभवत्तन्मधुवनं
प्रसिद्धिः पौराणिक्यहह ! भवतोऽद्रे ! विजयते ॥५९॥
महेन्द्राद्रे ! हृद्यैरमलवलभिन्नीलमणिभिः
क्वचित्पुञ्जीभूतैरिव विरचिता ते तनुरियम् ।
समुद्दीप्ता स्वैरं दिनकरकराणां व्यतिकराद्
अहो स्पर्धां बध्नात्यतिसुषमवैकुण्ठवपुषा ॥६०॥
चिरं कृत्स्नां पुष्णन्नवनिमचलेन्द्राच्युत इव
प्रतिष्ठां संप्राप्य त्वमिह विजयेथाः स्थिरतराम् ।
व्रजाम्यर्चाङ्कतुं मलयमनिलस्य प्रभवतो
भुवि स्तादाकल्पं मम शिखरिपारम्यमनघम् ॥६१॥

# प्रार्थना

[ निबन्धकः—आर. के. पार्थसारथिः एन. ए. ]

शारदां नौमि वरदां हस्तविन्यस्तपुस्तिकाम् ।
वीणावादनधारीणां कमलोदरकोमलाम् ॥
अज्ञानध्वान्तविभ्रान्तं निर्भरं दोषदूषितम् ।
लक्ष्मीवल्लभ ! मां पाहि त्वं हि मे शरणं परम् ॥
किं मामुपेक्षसे विष्णो ! भवदुःखनिपीडितम् ।
आयाहि मम रक्षार्थमार्तत्राणधुरंधर ॥
यं वेदवेद्यं मुनयो विजानन्त्यातस्थिवांसं तमसः परस्तात् ।
स मे विधत्तामतिकामधेनुर्मितंपचस्येह मनोविकासम् ॥
आर्तिं तव न वेद्मीति तर्कस्ते चेन्न सांप्रतम् ।
सर्वज्ञ इत्यनन्वर्था संभवेत्ते विकत्थना ॥
छायातरो ! संसृतिदुर्गमार्गे कामादिषड्वर्गनिदाघतप्तम् ।
भूयिष्ठकारुण्यफलैः कटाक्षैस्त्रायस्व मां दुःखितपान्थमेनम् ॥
मां क्षालय दयासिन्धो ! रागद्वेषादिपांसुलम् ।
बोधयन् भक्तिमार्गं ते तापत्रयहरौषधम् ॥
ध्यात्वा चिराय मुनिमानसराजहंसं
लोकैकनाथमभियान्ति मुमुक्षवो यम् ।
तं श्रीपतिं शुभनिधिं शरणं प्रपद्ये
तद्दासदासजनदासनिषेवकोऽहम् ॥

---

# संस्कृत-साहित्य-परिषदः सौधारम्भः

पाठकमहाभागाः, उल्लासालसेन चेतसा हृद्यः कश्चनानन्दसन्देशोऽद्य विनिवेद्यते भवतां पुरतः। येनोदन्तेन वयमिव भवन्तोऽपि भविष्यन्ति प्रमोदभरमनुभवन्तः सद्यः प्रशान्तान्तःकरणवृत्तयः।

शीतावसानमिव सूचयितुं त्यक्ताधिकारे तपसि, कोकिलालापमुखरे विलीन-जीवजडभावे सौरभोद्भ्रान्तैरलिसन्तानैरशान्तवनान्ते वृत्ते वसन्ते, शुभ-सौर-तपस्यस्य षष्ठाहे सोमे संस्कृत-साहित्य-परिषदः सौधारम्भः सोत्साहं समपद्यत। तत्र च दैवानुकूल्यविधानार्थं कल्यादारभ्य त्रिघटिका-वादनपर्यन्तं वेदविदां पुरोधसां समाजेन कृता तत्कर्मोचिता तत्तद्देवपूजा, आवर्तिता सप्तशती, हुतो हुतभुक्। हविःप्राशनवासनया प्रादुष्कृतरसनो हुताशनः कर्मणः सिद्धिमदूरभाविनीमिव न्यवेदयत्।

तत्तेषां कर्मणां स्वयंग्राहसाक्ष्यमुद्वहतीव क्लान्ते कमलिनीकान्ते, प्राप्ते दिनान्ते परिषद्भूमिभाग एव प्रचुरार्थोत्सर्गेण प्रस्तुते पटमण्डपे स्वनामसिद्धानां श्रीमतां नृपेन्द्रनाथ-सरकार के-सि. आइ-इ. महोदयानां नेतृत्वेन महानेकः समजनि विदुषां समाजः। परिषत्सम्पादकेन श्रीमता अमरेश्वरठाकुरवेदान्तशास्त्रिमहोदयेन "गृहनिर्माणार्थं प्राप्तानां प्रतिश्रुतानाञ्च द्रविणानां समष्टिर्द्विसहस्रीं नातिशेते प्रतीक्षिता तु पञ्चाशत्सहस्री। तथा व्ययितं चेद् यथापेक्षितं प्रकाण्डं सभामण्डपं, यथाप्रयोजनं ग्रन्थागारं चतुष्पाठीगृहं छात्रावासश्च निर्मीयेरन्नि"ति विज्ञापितम्।

सभापतिमहोदयेन कथितं प्रतिश्रुत-प्रस्तावितयोर्द्विसहस्री-पञ्चाशत्-सहस्रयोर्यद्यपि हिमवद्विन्ध्ययोः स्वर्ग-मर्तयोरिव चातिदूरमन्तरं तथापि न निरुत्साहैरस्माभिर्वर्तितव्यम्। दृष्टमस्माभिर्हिमालयशृङ्गे कालीमन्दिर-निर्माणावसरे, यन्मन्दिरार्थमपेक्षिता पञ्चपञ्चाशत्सहस्री संगृहीता तु साकल्येन त्रिसप्तत्यधिका त्रिशती। अन्ततस्तु यथासंकल्पित-द्रव्यव्यये-

नैव मन्दिरमतिसुन्दरं निर्मितमभूत् इति। आशास्ते च सभापतिमहोदयस्तदिदं सौभाग्यमत्रापि परिषत्प्रासादे पदं करिष्यति। परं सर्वैरेव सहृदयैरत्रार्थे सदया दृष्टिः प्रदेयेति।

संस्कृतसाहित्यपरिषद उद्देश्यं प्रयोजनीयतां कर्मपद्धतिश्च वर्णयता श्रीमता अशोकनाथशास्त्रिमहोदयेन कथितं यत् परिषद्ग्रन्थागारे मुद्रित-पुस्तकानां पञ्चसहस्री, हस्तलिखितानां पुनः सपादत्रिसहस्री वर्तते। तेभ्यः पुनर्हस्तलिखितेभ्य इदानीं यावत् परिषदा द्वाविंशतिर्ग्रन्था मुद्रापिताः। द्वाविंशतिं वत्सरान् यावत् संस्कृतसाहित्यपरिषत्पत्रिका च यथारीति प्रचरन्ती पाठकानां मनो रञ्जयति। अभिनीतानि च त्रिंशन्नाटकान्यभिनन्दयन्ति नाट्यामोदिनां मनांसीति।

एवमन्येष्वपि केषुचन कोविदेषु सामाजिकेषु च वाग्वैदग्ध्यं वितन्वत्सु सुकण्ठः कश्चन मधुरेण गान्धर्वेण सभां समापयत्।

श्रीमन्तः पाठकाः, सममस्माभिर्यूयमपीह महोत्सवे "स्वस्ति स्तादस्मै सौधारम्भाय विस्मृत-स्वपरसंरम्भाय परिषन्मन्त्रिणां मनःकल्पितं कायम् आददानाये"ति हिरण्यकशिपौ क्रममाणान् दानशूराणीश्वरञ्च दयाशूरं समं सम्प्रार्थयध्वमिति प्रार्थयामहे।

नानादिग्विदिगागतक्षितिभृतां व्रीडाञ्चितं विस्मयं
व्यादिश्यावनिजां विदेहतनयां मामुत्सुकामग्रहीत् ॥३०॥
क्षत्रा येन हतासवः परशुना त्रिःसप्तकृत्वः कृता
स्तद्दर्पः शमितस्त्वया पथि ततो भीत्या नृणां पश्यताम् ।
एकस्त्वं स्वयशः सितं तदयशः कृष्णञ्च विस्तारयन्
हिंसादूषितयागवद् व्यतनुथा लोके द्विरूपं फलम् ॥३१॥
शीलेनाप्रतिमेन ते प्रकृतयो मुग्धा महीशासने
यावत्ते नरपालतां नरपतिं सम्प्रार्थयाञ्चक्रिरे ।
तावन्मन्थरया खलीकृतमतिर्मातापि ते कैकयी
त्वां कान्तारचरं चकार सहसा सत्येन भूपाज्ञया ॥३२॥
तावत्तातनिदेशपालनकृतिं लोकोपकारव्रती
सम्यग् वर्तयितुं भवे मतिमतां दृष्टान्तभूतक्रमः ।
भार्याभ्रातृसमन्वितो वनमगात् साम्राज्यलक्ष्मीं त्यजन्
हित्वा देहमतिप्रियो नरपतेः प्राणैः पुरः प्रेषितः ॥३३॥
कञ्चित् कालमनेककौतुकमये तस्मिन्नुषित्वा वने
देवस्त्वं तपसा विशीर्णवपुषामासाद्य पूजाभरम् ।
व्याजान्मामपहार्य पापमतिना लङ्काधिपेनाञ्जसा
मामुद्धर्तुमना नलेन सहितः सेतुं चकर्थाम्बुधौ ॥३४॥
लङ्कोपान्तमुपेत्य सेतुसरणीमाश्रित्य लीलामयो
दुर्वृत्तानपहत्य राक्षसपशून् धर्मापकारव्रतान् ।
रक्षोऽधीश्वरमीश्वरप्रतिभटं प्राणैः परित्याजयं-
स्तन्नारीजनलोचनेषु निहितां मद्बाष्पधारां व्यधाः ॥३५॥
अन्ते राक्षसपक्षसंक्षयकृतेः स्वं भक्तवीरं वरं
पर्यालोच्य विभीषणं नृपपदे व्यादिश्य लङ्कापुरे ।
मामादाय हुताशनेन महितामागादयोध्यां भवाँ-
ल्लोके शान्तिरुपागमत् सुकृतिनामव्याहताऽभूत् क्रिया ॥३६॥

लोकानामिह संग्रहाय कति वा कर्माणि सम्पादयँ-
ल्लोकातीतगुणोऽपि लोकनियमान् नोपेक्षसे लोकवत् ।
तस्मादेव मृषापवादकलुषां ज्ञात्वापि दोषोज्झितां
सीतां गर्भभरालसामनुवनं मां निर्दयं प्रैषयः ॥३७॥
कालिन्दीकलवीचिधौतपुलिने वृन्दावने बन्धुभिः
क्रीडाकौतुककोमलेन मनसा धेनुव्रजं चारयन् ।
व्याजेनागतमाकलय्य तरसा हत्वा प्रलम्बासुरं
दम्भं दुष्कृतिनां भयं सुकृतिनां ध्वंसं पुराऽलम्भयः ॥३८॥
यावद् यज्ञफलादिकेषु नितरां विश्वासिनां देहिनां
हिंसावृत्तिरपादि वृद्धिमसमां सर्वत्र पृथ्वीतले ।
लोभादन्यधनेषु दस्युनिचया नैष्ठुर्यदुष्टान्तराः
कान्तारे कति वा सहायरहिताञ्जघ्नुर्जनानञ्जसा ॥३९॥
आर्तानां करुणध्वनिः प्रतिपदं कृत्वा दिशः शब्दिता
लोके काननपादपस्थविहगान् कामं व्यधाद्दुःखितान् ।
दुःखार्ता वनदेवता खगरवैरुन्मुच्य शोकध्वनिं
सम्भ्रान्ता तुहिनाश्रुभिः सकरुणं चक्रन्द मन्दोद्यमा ॥४०॥
वीराणां समराङ्गने निपततां शोकाकुला बान्धवाः
सोरस्ताडनमारभन्त नितरां दीर्घं विलापव्रतम् ।
साम्राज्यं परिरक्षितुं नरगणा लीलां गता राक्षसीं
लक्ष्यं केवलमक्षगोचरसुखं लक्ष्मीः परं दैवतम् ॥४१॥
यज्ञे यूपनिबद्धवध्यपशवो निःसम्बलाः स्वानसून्
सन्देहे पतितानवेत्य करुणं नादं विमुच्याम्बरे ।
यावत् कञ्चन रक्षितारमनघं सम्प्रार्थयाञ्चक्रिरे
तावद्धर्ममहिंसनं श्रुतिदिशा क्षौणीतले व्याकरोः ॥४२॥
राजान्तःपुरमन्तरप्रियपरं तातं तथा रागिणं
कान्तामन्तरतोषिणीं परिजनमाज्ञाविधेयव्रतान् ।

बालं शारदकौमुदीसुमधुरं हासोपरक्ताधरं
त्यक्त्वा तापनिवृत्तये जनिभृतां बुद्धोऽसि शिक्षापदम् ॥४३॥
आबालस्थविरं तवोपदिशतः शिक्षाफलं सेवते
स्त्रीणां तत्त्वविवेचना पदमधात् कासाञ्चिदन्तस्तले ।
नन्दं मन्दविवेकमन्धहृदयं स्त्रीबान्धवं बान्धवं
वैराग्ये विनियुज्य बुद्धपदवी सम्यक् समुन्मीलिता ॥४४॥
भूपानध्वरदीक्षितान् पशुवधे बद्धोद्यमान् वारयन्
नैष्ठुर्यव्रतनिष्ठिकां लयमयं निन्ये महीमण्डले ।
मा हिंस्यादिति हिंसनव्युपरमः सामान्यतः साध्यते
'श्येनेनाभिचरन् यजेत' किमितो लुब्धश्रुतौ सज्जताम् ॥४५॥
निष्कामो विधिरुत्तमस्त्रिभुवने दोषाय काम्यो विधि-
र्हिंसायास्तु विधानमस्ति सकलं काम्ये विधौ तन्त्रितम् ।
तस्मात् कामपरिच्युतो भव मृषा जह्या यथार्थं वदे-
र्हिंसां वर्जय मार्जयस्व हृदयं बुद्धः स्वयं सम्भवेः ॥४६॥
शीलं सत्कुरु सत्त्वभावविभवो भूया विशीर्णक्लमः
काये योजय शुद्धतां वचनगां शुद्धिं समुद्भावयेः ।
भिक्षासञ्चितवस्तुभक्षणभवं सन्तोषमासादये-
र्वैराग्यं मनसा श्रयेः स्वविषयादक्षान् परावर्तयेः ॥४७॥
इत्येवं कति सत्कथा नरगणेष्वादिश्य विश्वोत्तरो
रक्षां कामपि सन्ततान भगवान् कालानुरूपां भुवः ।
यावच्छिष्यगणादिभिः स्थितिमगाद् बौद्धप्रथा भूतले
तावत्त्वं स्वशरीरहानविषये चेतोरतिं प्राप्तवान् ॥४८॥
शिष्यास्ते विनिवृत्त-काम्यविधयः श्रद्धाविशुद्धान्तरा
भूयांसो गिरिगह्वरेषु परितः शिक्षापदं सन्दधुः ।
भूपानां कति बौद्धधर्मपरमाः शिष्यत्वलाभात् परं
नानाशिल्पकलासु धर्मनियमानावेशयाञ्चक्रिरे ॥४९॥

यद् यागादिविधेः फलेन विरहः सामान्यतः कीर्तित-
स्तद्देवारिगणस्य मोहनकृते नास्त्यत्र हेत्वन्तरम्।
देशं वा समयं विविच्य भगवान् पूर्णात्मनांऽशेन वा
साधूनां रिपुसंक्षयं वितनुते पाति प्रजास्तातवत् ॥५०॥
तस्मादूर्ध्वमसारयुक्तिबहुले बौद्धे मते सङ्गता
यावद्धर्ममपास्य दास्यमगमन् नास्तिक्यबुद्धेर्जनाः।
म्लेच्छानां प्रभुतावशादतितरामाचारहीनास्तदा
कल्कित्वं परिगृह्य दुष्टदमनं भूत्वा कृपाणी व्यधाः ॥५१॥
इत्थम्भूतदशामसाधिममयीमासाद्य यावन्मही
यत्रैवासुरराक्षसादिमहसा जाता चिरोपद्रुता।
तावत्त्वं सहसा पुराणपुरुषो यत् किञ्च रूपं दध-
ल्लोकोपद्रवसंक्षयं विहितवान् कस्ते समः शक्तिमान् ॥५२॥
सूर्याचन्द्रमसौ तवैव विभया तेजः परं विन्दतो
वातस्त्वत्कृपया प्रवाति जगतामन्तर्बहिश्चानिशम्।
वह्नौ दाहकशक्तिरम्बुषु तथा शैत्यं घने वर्षणं
कस्यान्यस्य नियोगमात्मनियमे वाञ्छन्त्यपेक्षापदम् ॥५३॥
नाद्यापि प्रतिभाति भूमिवलये तावत्तमा दुर्दशा
यावत्त्वामवतार एव सफलो नारायणस्याभवत्।
केषाञ्चित् सुकृतात्मनां हृदि परामुत्पाद्य भक्तिं स्थिरां
स्वां पूजां जगति प्रचारय यतः सर्वार्थसिद्धिर्भवेत् ॥५४॥
सत्यस्त्वं वितथः प्रपञ्चनिचयस्तत् सत्यनारायणं
त्वामाहुः सकलाः सुरासुरगणाः साध्याश्च सिद्धाश्च ये।
तन्मूर्त्या प्रचरन् धरापरिसरे पूजोपचारं भजन्
शान्त्यैव प्रशमं नयस्व जगतां दुःखं भवक्षोभहृत् ॥५५॥
दूर्वाश्यामलमङ्गमङ्ग वसनं जाम्बूनदद्योतनं
चातुर्बाहुकशोभया परमया शङ्खादिलीलाधनम्।

पद्मामण्डितवामभागमनघं भव्याभिधाकीर्त्तनं
लोकाश्चेतसि चेतयन्तु सुतरां तं सत्यनारायणम् ॥५६॥
अथ जलधिसुताया रम्यवाचं निशम्य
व्यपगतपरिचिन्तः सत्यनारायणात्मा ।
श्रियमनतिशयश्रीः काश्चिदन्यां दधानः
कलिकलनमनल्पं नैव मेने तदानीम् ॥५७॥

इति श्रीकालीपदतर्काचार्यकृते सत्यानुभाव-महाकाव्ये
रमोपदेशो नाम द्वितीयः सर्गः ॥२॥

## तृतीयः सर्गः

ततः प्रसन्नेन हृदा रमापतिस्तदैव वश्यं स्मरति स्म नारदम् ।
अकालहीनं गगनाङ्गने चरन्नदृश्यतासौ हरिभक्तिसारथिः ॥१॥
कर्णावलम्बिस्फटिकाक्षमालया करे महत्या सुरवं दधानया ।
पवित्रसूत्रोज्ज्वलकोमलश्रिया योगी स रेजे तुलसीदलस्रजा ॥२॥
शुभ्रप्रभा शीर्षविलम्बिनी जटा शुभ्रा विभूतिश्च तदङ्गसङ्गिनी ।
वर्णान्तरास्पृष्टदुकूलशोभया पदान्तपर्यन्तमभूत् सितायितम् ॥३॥
श्मश्रूणि शुभ्राणि तथा सिते भ्रुवौ पवित्रसूत्रं स्फटिकाक्षमालिका ।
बहिः सितानां नितरां समागमो मनश्चरीं शंसति शुद्धसत्त्वताम् ॥४॥
विगाहमानो गगनाङ्गनं मुनिस्तनुश्रिया दीप्ततपःप्रचारया ।
सुदीप्रमध्याह्नमरीचिमालिना समानतामाप सुदूरवर्त्तिनाम् ॥५॥
नानाविधाराधितनादमाधुरीविकृष्टचित्ता गगनाभिवर्त्तिनः ।
संमेनिरे नैकपरिश्रमार्जितं तपःफलं तन्महतीस्वरोत्सवे ॥६॥
पुरा सुदूरादुपकर्ण्य नारदं नभोविभागेषु विमानचारिणः ।
प्राकल्पयन्नर्घ्यमनर्घरूपकं पाद्यं तथाऽस्मै मधुपर्कमुत्तमम् ॥७॥
प्रणामपर्यस्तशिरस्यभूषणाः सनातनेशस्तुतिवादसाधनाः ।
अमानयन्नाकुलसिद्धचारणा मुनिं सुरम्यस्वरगीतगायनाः ॥८॥

आशीर्भिरभ्यर्च्य कृतानतीनतस्तपस्विनस्तापसतेजसां निधिः ।
क्रमेण वीणाक्वणितामृतस्रवैरतर्पयत् तप्तमरीचिमन्दिरम् ॥९॥
तपोनिधेस्तस्य गुणावमाननाभयादभूत् क्षीणकरो दिनेश्वरः ।
धरासमाकृष्टपयोमयात्मना ततान शैत्यं तपनोऽपि नारदे ॥१०॥
न यावता शैत्यसमागमव्यथा स तावता तप्तकरेण दीपितः ।
मुनिं निजेनोपचचार भास्करो महत्तमे तेजसि तेजसां लयः ॥११॥
अनन्यसाधारणतेजसां पतिस्तदालयं दीप्तिमयं समन्ततः ।
समेत्य नेत्रोपहतिं न जग्मिवान् महत्तमानामखिलं जनातिगम् ॥१२
समीक्ष्य वीणागुणसञ्चरत्करं करेण सव्येन विविक्तताल्कम् ।
सूरः सुराधीशकृतार्चनाक्रमं यथार्हमानर्च सुरर्षिनारदम् ॥१३॥
प्रतिप्रणामेन समेत्य भास्करं तपस्विनामर्च्यतमं महः परम् ।
अकालहीनं पथि चन्द्रमन्दिरं सुधामयं सोऽथ जगाम सुन्दरम् ॥१४॥
ततः शशाङ्केन कृतां समर्चनाम् उपेत्य कृत्वा च विशेषसङ्कथाम् ।
पयोजभूकेतनमापदञ्जसा पिता प्रजानामतिभक्तिगोचरः ॥१५॥
ततः सुतं वीक्ष्य पिता त्वरान्वितः शिरस्युपाघ्राय न तृप्तिमाययौ ।
प्रियेषु सर्वेषु सुतः किलाधिकः स चान्वहं नूतनतां प्रपद्यते ॥१६॥
पदान्तविश्रान्तजटावलिं ततः सुतं समालिङ्ग्य विशुद्धिसङ्गिनम् ।
तपोजपक्षेममपृच्छदुत्सुके रुणद्धि रागो दयितस्य दिव्यताम् ॥१७॥
क्व तात गन्तासि किमर्थमेव वा समुद्यमस्ते विरतो न लक्ष्यते ।
अभीष्टदेशाश्रयणेन देहिनां शरीरमाक्रामति भूरिशः क्लमम् ॥१८॥
पितामहेनापि पितृत्वमीयुषा तथा तदानीमनुयुक्त आत्मजः ।
स्मृतोऽस्मि नारायणपादपांसुना व्रजामि वैकुण्ठमिति व्यभाषत ॥१९॥
ततः श्रुतिभ्यां परिपीय सादरं सुतोदितं ध्यानपरः क्षणं विभुः ।
जनार्दनेन स्मृतिहेतुमन्वभूत् स्वकीयसंसारशुभस्थितिस्पृहाम् ॥२०॥
अथाविलम्बं तनयं व्यसर्जयद् विसर्जितस्नेहविधिः पितामहः ।
विचिन्त्य वृत्तान्तगुरुत्वलाघवे श्रयन्ति सन्तः कृतिमायतिक्षमाम् ॥२१॥

अकालहीनं स विसर्जितस्ततः कृतप्रणामो विभुपादपद्मयोः ।
प्रतस्थिवानस्तशरीरसंक्रमः क्रमेण वैकुण्ठपुरं व्यलोकयत् ॥२२॥
पुरोत्तमे यत्र जनार्दनप्रियाः सदा रमन्ते भगवद्गुणस्तवे ।
सुदूरतः पीतवतां हरेर्यशो लयं समासीदति पापकालिमा ॥२३॥
मुखे विभुस्तोत्रकथा प्रसर्पिणी शरीरशोभा तुलसीदलस्रजा ।
मनो मनोजादिसपत्नवर्जितं यतो जनानां हरिभक्तिशालिनाम् ॥२४॥
पदे पदे यत्र सतां समागमो वियोगिता केवलमेनसा समम् ।
सुखैकलीलागहने निकेतने न दुःखिता जीवति भिक्षयापि वा ॥२५॥
विभूतियोगाद् भगवान विलक्षणः सुलक्षणाभिर्दयिताभिरन्वहम् ।
प्रणीय रासोत्सवकौतुकोदयं विमुक्तभक्तेषु चिरप्रमोदकृत ॥२६॥
प्रसूनवल्ली सहकारसङ्गता प्रसूनशोभासुभगा निरन्तरा ।
रसोपरक्तभ्रमरानुनादिता तनोति विष्णोर्गुणकीर्तनभ्रमम् ॥२७॥
रत्नप्रतानग्रथिताट्टपङ्क्तयो दिवानिशं रत्नकरोपबृंहिताः ।
बृहत्तमं मानममानयन्निजं वियत्पथे हर्म्यमतिर्यतः स्थिता ॥२८॥
आस्थानगेहे कनकासनावली करप्रतानै रजतासनोत्थितैः ।
विमिश्रिता चीनसितोत्तरच्छदा विभाति पीतेव वराङ्गनातनुः ॥२९॥
विचित्रचित्रा गृहभित्तिरुत्तमा महत्तमानामपि चित्तवित्तमा ।
प्रकल्पितानल्पकशिल्पसौष्ठवैर्व्यरोचतानन्यसमा चिरं समाः ॥३०॥
तदङ्गने पुष्पपरागसौरभैरहर्निशं रम्यगुणः प्रभञ्जनः ।
गतागतैस्तृप्तिकरः शरीरिणां न तद्वियोगेन निदाघवेदना ॥३१॥
गृहान्तरे यत्र सुचारुचन्द्रिकाविशुद्धचन्द्रातपसक्तमौक्तिके ।
गवाक्षजालैः प्रतिपूर्णमातिथौ स्वसाम्यमायाति सुधांशुरीक्षितुम् ॥३२॥
गृहे गृहे यत्र सुधानुलेपना सुधामयं तत्र किल मन्दिरं व्यधात् ।
महोत्सवानामनिशं समागमान् तदेकमाराध्यतमं सुयोगिनाम् ॥३३॥
तदङ्गनान्ते तुलसीतरुश्रिया यथाक्रमं कौसुमपादपस्रजा ।
सुशोभिते षट्पदसम्पदाङ्किते प्रतिप्रभातं हरिभक्तचारणा ॥३४॥

निशाऽव्यपाये सुविशुद्धिभागिनः कृतप्रसूनाहरणा हरिं परम् ।
अनन्यसामान्यगुणं जनार्दनं समर्चयन्तः स्थिरधाम तन्वते ॥३५॥
प्रसूनशोभासुभगे वनोत्तमे वसन्तसम्पादितसर्वविभ्रमे ।
चिराय वश्येव वनाधिदेवता व्यवस्थिता माधवतुष्टिपुष्टये ॥३६॥
कियानहो भूतिसमागमो हरेर्यदस्य वश्या वनदेवताऽभवत् ।
पितामहाद्यैरपि यस्य सादरं पदारविन्दं हृदये निधीयते ॥३७॥
रसालहिन्तालतमालपादपैरशोकजम्बीरकपित्थतिन्दुकैः ।
गुवाकनारङ्गकनारिकेलकैः प्रसाधितं तद्वनमाप नन्दथुम् ॥३८॥
क्वचिद्‌गुवाकस्तवकैरुपस्तुता क्वचित् प्रकीर्णा सहकारसत्फलैः ।
क्वचित्पदे सङ्क्रमिता फलान्तरैर्वनावनी श्रीगृहतामधारयत् ॥३९॥
तरौ तरौ पुष्पचयेन पेलवे न जातु वातः परिखिद्यतेतराम् ।
कठोरशाखाकृतगाढपीडनाल्लतावली तं समरक्षदञ्जसा ॥४०॥
भास्वत्कलापाः सकलाः कलापिनो नृत्यन्त्यकालेऽपि विना घनागमम् ।
भुजङ्गमा बर्हिणबर्हशायिनो विमुञ्चते मञ्जुगतिं सदागतिम् ॥४१॥
पिका रसालाञ्चलगुप्तविग्रहाः शुकाः पलाशच्छविलुप्तलक्षणाः ।
विलक्षणाधोक्षजनामचर्चया सुशिक्षिता दैववशेन सूचिताः ॥४२॥
न पल्लवो यत्र न तत्र स द्रुमो न वल्लरी तत्र न या प्रसूनिता ।
न तत् प्रसूनं न हि यत्र सौरभं न सौरभं तत्र न यत्र वासना ॥४३॥
लता न तस्मिन्न च वा महीरुहा व्रजन्त्यकाले विफलत्वमात्मना ।
फलानि पुष्पाण्यपि वा न विच्युतिं श्रयन्ति पूर्वं परिणामसङ्क्रमात् ॥४४॥
द्रुमाः समस्ताः सुसमानमस्तका व्यवस्थिताः श्रेणिनिबद्धविग्रहाः ।
क्वचित् क्वचिन्मञ्जुलवल्लरीस्रजा गृहायितं कुञ्जवनं व्यरोचत ॥४५॥
शेफालिकापुष्पवने न मल्लिका न मल्लिकाया विपिने तथापरा ।
ततः सदा सौरभसारसेविनाम् अमिश्रगन्धानुभवो न रुध्यते ॥४६॥
सितासमायुक्तपयोरसान्तरात् पृथक्त्वमेकैकरसान्तरे स्थिरम् ।
अमिश्रवस्तुप्रणयी न तृप्तिभाग् विमिश्रवस्तुप्रचयोपभोगतः ॥४७॥

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| April, 1940 | १८६१-शकीये चैत्रे २२श-वर्षस्य १२श-संख्या | Vol. XXII No. 12. |


प्रकृतिविलासकाव्ये

## समीर-समर्हणं


[ निबन्धकः—सा० भू० कृष्णमूर्तिशास्त्री ]


श्रियमविरतं तन्याच्छ्रीमन्मरुत्तनयोऽमितां
सरिदधिपतिं तीर्त्वा लङ्कां जवेन विवेश यः ।
यमभिदधते शिष्यं श्लाघ्यं रवेः परमात्मनो
रघुपरिवृढो येन श्रीशः सदा हृदि भावितः ॥१॥

कलयतितरामाह्लादं मे गिरिर्मलयाभिधो
यमिममनिलोऽध्यासीनोऽस्मिञ्जगत्यभिनन्द्यते ।
परिमलभरैः पाटीराणां भृशं परिपोषितो
विषधरवरैराक्रान्तानां चिरन्तनजन्मनाम् ॥२॥

धरणिदिविषन्नन्दन्नेवं गिरेः परिदर्शनात्
स्ववनकुसुमैरानर्चायं वनान्तसमीरणम् ।
विकचकुटजैः प्रस्थप्रान्ते नितान्तमनोहरे
कुसुमिततरुच्छायास्निग्धं निषेव्य शिलातलम् ॥३॥

निखिलजगतां मुख्यः प्राणः परा ह्यसि देवता
श्रुतिरपि भवत्तत्त्वं वक्तुं बिभेति सुदुर्ग्रहम् ।
कथमिव जडः शक्तः स्तोतुं भवन्तमहं विभुं
पृथुकभणितं श्रुत्वाऽपि त्वं प्रसीद पितेव सः ॥४॥
समधिकबलस्त्वं भूतानां समीर! विराजसे
भवदभिमते मार्गे तानि प्रवर्तयसि द्रुतम् ।
अतिशयितुमुत्पश्य त्वां कः समस्ति जगत्तले
प्रकृतिवशगोऽप्येको लोके पराक्रमसे स्वयम् ॥५॥
भ्रमति सततं पृथ्वीगोलं सशैलवनं महद्
दिवसकृदुदेत्यस्तं याति क्षपास्वपि चन्द्रमाः ।
सलिलनिधयोऽप्यूर्मिक्षोभैश्चलन्ति शिखी ज्वल-
त्यखिलमपि ते लीलामात्रं समीर विजानताम् ॥६॥
किमिह वचसां गुंफैस्तत्त्वं न्त्विवयदद्वयसं विभो
जगदखिलमप्याविष्टं सत् त्वयैव विचेष्टते ।
वहसि यदधीकारं कृत्स्नं महेश्वरतः प्रति
प्रकृतिवशगं भूतं सर्वं त्वयैव नियन्त्रितम् ॥७॥
विपरिणमयस्याद्यं भूतत्रयं बहुधाऽसकृत
न वियति परं नीरूपेऽस्मिन् पराक्रमसे मरुत् ।
किमपि न भवान्कर्तुं शक्तः प्रभौ त्वदपि ध्रुवं
दधति कतिचित्स्वाधीकारं विशिष्य तपस्विषु ॥८॥
किमपि किमपि स्वैरङ्कुर्वन्नशीतकतां गतो
विहरसि सदा द्यावाभूम्योरमन्दकुतूहलात् ।
चिरसुचरितैरुद्भूतस्त्वं क्रमात्परिपोषितः
शिशुरिव तयोः प्राणेभ्योऽपि प्रियोऽसि सदागते ॥९॥
अमितवसतिं द्यौरेषा ते ददाति समादरात्
त्वमपि विहरन्नत्यन्ताय प्रहर्षभरान्वितः ।

उडुसमुदयैर्मुक्ताकल्पैरलंकुरुषे च तां
जयति युवयोर्योगः स्निग्धः परस्पर-रागतः ॥१०॥
तरणिकिरणानावृण्वानः प्रचण्डतरं भ्रमन्
घटयसि घनान् कौतस्कुत्यान् झटित्यचलोपमान्।
सरभसममून् वर्षव्यग्रान्मुहुः परिगर्जतः
सपदि विभजन्नन्तर्धत्से स्वयं कृतकृत्यवत् ॥११॥
जलदपटलाः संलक्ष्यन्ते त्वया हि समाहृताः
खगमृगनराकाराः केचित्प्रतिक्षणभेदतः ।
कनकशिखरिप्रख्याः सायन्तनातपदीपिता
हरगिरिनिभाश्चान्ये केचित्तमालवनोपमाः ॥१२॥
अनतिकुटिलं रत्नस्तंभश्रियं दधदायतं
यदतिसुभगं चित्रैर्वर्णैर्धनुर्गगनान्तरे ।
तदपि नियतं चक्षुःप्रीत्यै त्वया विहितो महान्
प्रसदनपरीपाकोऽस्माकं मरुन् पृथिवीजुषाम् ॥१३॥
नयनहरणव्यग्रोदग्रक्षणस्फुरणाञ्चित-
प्रततहरितो विद्युत्पुञ्जान् पुरः परिदर्शयन्।
सहभवमपि ध्वानं पश्चाच्छ्रुतौ विनिवेशयन्
नवजलधरैः सिञ्चस्युर्वीं जगद्धितकाम्यया ॥१४॥
वियति वितते विष्वद्रीचो बलक्षतरर्क्षरुग्-
घनसमुदयानद्भिर्वार्धेः प्रपूर्य रवेः करैः ।
नुदसि सहसा लोकस्थित्यै करीन्द्रकरोपमं
कलयितुममून् धारापातं समीर समन्ततः ॥१५॥
सरिदधिपतौ हास्यं पुष्णन् रसं परिवर्धसे
यदयममितैस्तुङ्गैर्भङ्गैस्त्वयैव विकारितः ।
ह्रियमपि विहायैवं शब्दान् रटञ्छ्रुतिदुःश्रवान्
नर इव महाभूताविष्टः सदा परिनृत्यति ॥१६॥

कृतपरिकरो रत्नान्यब्धेरवाप्तुमधस्तना-
न्यनिल सुचिरं पारेवारीण्यमन्दरयं किरन् ।
न किमपि ततोऽलब्ध्वा ह्यन्ते जहासि परिश्रमं
जगति मतिमान् को वा कालं वृथैव निनीषति ॥१७॥
क्षिति-गगनयोः संपत्स्तोमैश्चिरं परिपोषणे
जलनिधिमृते नान्यत् किञ्चित् समस्ति सुसाधनम् ।
इति खलु विनिश्चिन्वानस्त्वं तयोरिव मध्यग-
स्तमुपगतवान् प्रेम्णा नक्तन्दिवं विजिगीषसि ॥१८॥
बलभिदुपलाद्रीन्द्रश्रीभृत्तरङ्गपरंपरा-
विरचनकलावैदग्ध्यावर्जिताखिलमानसः ।
मुहुरभिनयैर्हृद्यैस्तन्वन् रसं परमाद्भुतं
चरसि विरुवन् गर्वोद्रेकात् समुद्रमधिश्रितः ॥१९॥
क्वचितवियत्प्रान्तप्रेङ्खत्तटित्वदरुन्तुद-
स्तनितजनितप्रत्युच्चण्डध्वनिक्षितिभृद्गुहान् ।
प्रकृतिमधुरान् प्रत्यग्वार्धेस्तटानटवीभृतो
नटनममितं रङ्गीकर्तुं पटुप्रकटं तव ॥२०॥
क्षुदुपहतये त्वामास्वाद्य प्रयन्तु भुजङ्गमा
न किमपि ततश्छिन्नं मा गा व्यथां मलयानिल ।
यदतिकुटिला दोषांशांस्ते लिहन्ति कुतूहलाद्
वृजिनहरणे दुष्टात्मानो भवन्ति सतां मताः ॥२१॥
गमयसि तनूर्नावो डोलावदीषदुदञ्चयन्
उपरि चलतामूर्म्यद्रीणां निजोर्ध्वचलत्कटाः ।
प्रकृतिरसिकास्त्वल्पे मत्या वितीर्य तदान्तरं
व्रजितुमुदधौ किञ्चिद्दूरं भवन्ति समुत्सुकाः ॥२२॥
कतिचन महानावो यन्त्रैर्व्रजन्ति पुरोपमा
भवदुपकृतिर्यद्यप्यासां प्रभञ्जन मैव भूत् ।

त्यज मतिमथाप्येतां झंझामरुद्विनिमज्जने
न खलु जनयेदौदासीन्यं मदश्चपलात्मनाम् ॥२३॥

मलयपवन स्पर्शैस्तन्वन सुखं मधुचन्द्रमः-
प्रभृतिषु भृशं स्निह्यन साद्ध' वहत्स्वधिकं तव ।
विकृतिममितां चेतःस्वेणीदृशां चपलात्मनाम्
अभिनिविशसे प्रद्युम्नस्य प्रभोः सचिवोत्तमः ॥२४॥

कुसुमसुभगाः स्तोकं नम्राः फलैश्च पचेलिमै
रसिकमधुपास्वाद्या रागश्रिया हृदयङ्गमाः ।
मृदुलपुलिनाभोगान प्राप्ता भृशं प्रियदर्शनाः
कनकलतिकाः कूले सिन्धोर्धिनोषि समीरण ॥२५॥

स्तनतटलुठत्सूक्ष्मक्षौमप्रतिक्षणकर्षण-
प्रभवसुभगाक्रोशभ्राम्यद्दृगन्तसमञ्चितः ।
नगररमणीर्गाढं प्रेम्णा परिष्वजसेऽबुधौ
पवन ! भवतः सेवां कर्तुं स्वयं समुपेयुषोः ॥२६॥

कचभरसमुद्ग्रन्थे तन्व्याः करौ विनियोजयन्-
श्लथयसि शनैः श्लक्ष्णं वासः स्वनन्मणिमेखलम् ।
पृथुलजघना सुभ्रूः किञ्चिन्निगद्य मृदु स्वयं
पुलिनमधरीकुर्वाणेव ह्रिया हि निषीदति ॥२७॥

सरसिजमुखैः फुल्लैः पुष्पैर्दिवा समलङ्कृतां
प्रकृतिवनितां नक्तं जाग्रत्सुमैः कुमुदादिभिः ।
ललितललितैर्नृत्यैर्नित्यं मनोहरिणीं प्रियां
रमयसि वने गाढाश्लेषैः समीरण कामुकीम् ॥२८॥

वरतनुशतै रक्तैः स्वैरं विहर्तुमनर्गला-
मधिकृतिमिमां रुन्धां को वा तवातिमनोहराम् ।
अभिनवसुमप्राग्भारास्त्वं लता विधुवन बलाद्
अनिल ! भुवि नद्यारामाणामिनैः प्रतिषिध्यसे ॥२९॥

भृशरयवशोद्भवत्फेना कलिन्दगिरीन्द्रजा
शिखरिणि यदि स्यन्देतोर्स्युद्रुमैः सिकतामये ।
अनुरयति तां लक्ष्मीं वेणी त्वया शिथिलीकृता
विकचकुटजा तन्वङ्गाया नितंबविलंबिनी ॥३०॥

( क्रमशः )

---

# वङ्गीयरमणीनां सांसारिकजीवनम्

[ निबन्धिका—श्रीगौरीराणी-सिंहः ]

वयं यस्मिन् देशे निवसामः स तु आर्यावर्तत्वेन पुण्यभूमित्वेन चाभिधीयते । यदुक्तममरपादैः "आर्यावर्तः पुण्यभूमिरि"ति । अतोऽस्माभिरेतद्देशमधिवसन्तीभिः पुण्यभूमिरिति नाम्नः सार्थक्यं सम्पादनीयम् । तदर्थमस्माभिस्तत्रभवतीनां सावित्री-दमयन्ती-जनकात्मजादीनां सतीकुलावतंसभूतानां पातिव्रत्यादि-पुरःसरं सदाचरणं शश्वदनुष्ठेयम् ।

वङ्गीयरमण्यः खलु मातृस्वरूपाः । प्रजापालनं पतिशुश्रूषणञ्च तासामसाधारणो धर्मः । उक्तञ्च श्रीमद्भागवते "भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया । तद्बन्धूनाञ्च कल्याण्यः प्रजानाञ्चानुपोषणमि"ति । अत एवैतद्देशीयानामङ्गनानां दर्शनेनैव मनस्युदेति कश्चिदनिर्वचनीयो मातृभावो मनस्विनाम् । एता ह्यङ्गना गृहस्य शोभा लक्ष्मीस्वरूपिण्यश्च, अतस्ता गृहलक्ष्मीत्वेन व्यपदिश्यन्ते । उक्तं भवभूतिनोत्तररामचरिते—

"इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः" । इति

अपरञ्च तेनैव—"सन्त्यज्य प्रियगृहिणीं गृहस्य शोभाम्" इति । सौन्दर्यं कोमलता मधुरतादयश्च तासामसाधारणा गुणाः । यासां खलु रमणीनां

चेतसि एतेषां गुणगणानामेकतमोऽपि न विराजते तास्तु न लक्ष्मीस्वरूपाः। नार्य एव भाग्यवतां वेश्मनि लक्ष्मीरूपेण, तथा पापात्मनां वेश्मनि तद्वैपरीत्येन तिष्ठन्ति। इदानीं शिक्षा-दीक्षाप्रभावेण पाश्चात्यसंसर्गेण च पुरुषेषु कुत्सिताचारेषु कुकार्यकारिष्वपि नार्य एवार्याणामार्यत्वमधुनापि प्रवर्तयन्तीत्यस्माकं प्रतिभाति। सन्तानपोषणं गृहकर्मकरणादिकं कृत्यजातं नारीभिरवश्यं कर्तव्यम्।

उक्तञ्च मनुना—"अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्।
शौचे धर्मेऽन्नपक्तौ च पारिणाह्यस्य रक्षणे॥"

इति। एतन्मनुवचनं प्रतिपालयन्तीभिरार्यरमणीभिरनायासेन धर्मोऽर्जयितुं शक्यते। गृहमधिष्ठाय धर्ममोक्षयोरर्जनाय कानिचिच्छास्त्रविधानानि स्मरणीयान्यनुष्ठेयानि च ताभिः। तद् यथा—

उषसि भगवन्नाम स्मारं स्मारं शय्योत्थायं शौचादिकं समाप्यानाविले नद्यादीनां पयसि स्नानं समाप्य धौते वाससी परिधाय देवालयान्तरुपविश्य यथाशक्ति चित्तैकाग्र्येण भगवच्चिन्ता कर्तव्या। स्तोत्रञ्च पठितव्यं यथाशक्ति।

ततो महानसं प्रविश्य स्वहस्तेन अन्नादिकं प्रस्तूय अन्नपूर्णारूपेण भोजयितव्या आत्मपरिजनाः स्वयञ्च भोक्तव्यमवशेषे। यतो भवत्युच्छिष्टं दम्पत्योर्भुक्तावशिष्टमन्नम्। ततो यथावसरं विश्रम्य पुनरन्यद् गृहकर्मजातं समाप्यापराह्णे किञ्चिदितस्ततः परिभ्रम्य प्रदोषे पुनर्यथाशक्ति भगवन्नाम स्मृत्वा देवगृहादौ दीपदानेन गृहान्तरतमसा सह मानसिकान्धकारं दूरीकुर्युः।

सायं प्रातः पर्नि देवताज्ञानेन पूजयेयुः। एवं करणेनाङ्गनाभिः सुखिनीभिर्भवितव्यम्। अन्ते च भगवदाशीर्वादेन पुत्रपौत्रादीन् विषये नियुज्य पुण्यकृतां लोकानवाप्नुयुः। इतरे गुरुजना अपि पूजनीयाः। परिजनेषु दयादाक्षिण्यादिकं प्रदर्शनीयं सदैव। प्रचुरतरधनाधिकारिण्याऽपि भोगासक्तिम् अहम्भावं परिहृत्य सदैव दासदासीषु सरलता प्रदर्शनीया, न तासु असद्व्यवहारोऽसद्भाषणं वा कदापि प्रयोक्तव्यम्। भवितव्यमतिथिवत्सलाभिः। उन्मार्गगामिनः पुरुषान् सदुपदेशदानेन सदाचारान् विदधीरन्।

इनोऽप्यन्यद् बहु कर्तव्यजातं वर्तते। यास्तु एतद्विपरीताचारास्ताः कुलकण्टकरूपाः। तदेतत् साध्वनुशिष्टा रमण्यः कविशिरोमणिना—

"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥" इति।

सतीत्वपरिरक्षणं परो धर्मः। सत्स्वपि हीरकादिखचितालङ्कारेषु शङ्खवलय-सिन्दूरबिन्दव एव तासां सुषमानिदानम्। पतिर्दैवतम्। देवताज्ञानेनानिशं तं पूजयेयुः। एतवमाचरन्त्यो रमण्यो नारीजनुषः सार्थक्यं लभन्ते।

इदानीन्तना नार्यस्तु प्रायश आचारविहीनाः। तास्तु आधुनिक-पाश्चात्यशिक्षाप्रभावतः पतिं भृत्यमिव मन्यमानाः स्वयं देवतारूपेण तेषां पूजनमभिलषन्ति। अतः साधूक्तम्—

"तासां यत् पतिदेवतेति वचनं षष्ठीसमासाश्रितम्" इति।

जीवनरक्षायाः प्रधानोपायः पवित्रान्नादीनां भक्षणम्। आधुनिक्यस्तु रमण्यो रन्धनकार्यमाचारहीनेषूत्कलवासिषु निक्षिप्य स्वयं पादुकामार्जने निरता भवन्ति। प्रातः पूजाजपादिकं विहाय विदेशीयाभक्ष्यभक्षणे तथा धर्मग्रन्थान् परिहृत्य उपन्यासपठने मनो निवेशयन्ति।

प्रातः कृष्णपर्णीनिस्यन्दपानं तासां प्रातःकृत्यं किमपि। एतेन जगद् ध्वंसमुखमेवाभिसरति। यतस्ताभिर्गार्हस्थ्यधर्मस्य सम्यग्वैपरीत्यमाचर्यते। आस्तां तासामालोचना। एतदतीवान्याय्यमिव मन्यामहे। यास्तु गृहे गृहिण्यः, विपदि सचिवाः, भोजने जननीरूपाश्च ता एव गृहिणीपदमलङ्कर्तुं शक्नुवन्ति। उक्तञ्च कालिदासपादैरजविलापप्रसङ्गे—

"गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद मे न किं हृतम्॥"

---

कौतुकमञ्जरी

[ अध्यापक-डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीण-संशोधिता ]

[ भरत-कृत-कौतुक-मञ्जर्याख्य-ग्रन्थस्यादर्शान्तरं नास्माभिर्बहु-क्लेशेनापि लब्धम् अयमस्य मुद्रणोद्यमः केवलं संस्कृत-साहित्य-परिषदुपलब्धादर्शानुसारेणास्माभिः कृतः। ग्रन्थालोचनसौकर्यदानेन मुद्र-णाज्ञाप्रदानेन स्वपत्रिकायां प्रकाशनेन चेयं परिषदस्मद्धन्यवादभाजनम्।

एतद्ग्रन्थः कविना बहुलं शृङ्गाररसमाश्रित्य कौतुकाधानमनीषया विर-चितः। अत्र तु कविना स्वयं विरचय्य कियन्तः श्लोकाः सन्निवेशिता इति मन्यामहे; परन्तु भूयसा सोऽन्योपजीवीति न सन्देहः। वस्तुतः संग्रह-ग्रन्थोऽयमिति भाषमाणेष्वस्मासु न कापि सत्यहानिः स्यात्। अस्तु संग्रहमूल-कोऽयं, तथापि उपादेय एष ग्रन्थः परमकौतुकावहत्वात् सन्निवेशचातुर्यात्, सुललितत्वाच्च। आदर्श-ग्रन्थस्य कालपर्यालोचनयाऽस्य न्यूनतो द्विशत-वार्षिकत्वं प्रतीयते, इति प्राचीनतयाप्ययमस्माकं मुद्रणोद्यमः]।

भरतकृता

# कौतुकमञ्जरी

प्रणम्य वाण्याश्चरणारविन्दं सुरासुराणामपि वन्दनीयम्।
यूनां मुदे कामवतां मनोज्ञा प्रकाश्यते कौतुक-मञ्जरीयम्॥

तावदुद्वाहानन्तरं कान्तालिङ्गनमसहमाना परेद्युर्मातर्याह—

मातः केलि-गृहं न यामि शयितुं कस्माच्च चन्द्रानने
जामाता तव निर्दयो निज-भुजा-पाशेन मां पीडति।
क्षुण्णाग्रौ च कुचौ करोति करजैर्दन्तैः प्रपीडन्मुखं
नीवी-बन्ध-विमोक्षणञ्च कुरुते निद्रापि नायाति मे॥

ततः कालान्तरे कान्तागारं गता सा प्रियसखीं सम्बोध्याह—

श्वश्रूः कुप्यतु विद्विषन्तु सुहृदो निन्दन्तु वा यातर-
स्तस्मिन्नेव न मन्दिरे सखि पुनः स्वापो विधेयो मया।
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
मार्जारी नखरैः करैः[1] कृतवती कां कां न मे दुर्दशाम् ॥

गुरुषु कथमेवोक्ता(?)—

कृतान्तः कान्तो वा समजनि न भेदः प्रथमत—
स्ततो द्वित्रैर्मासैर्मनुज इति जग्राह हृदयम्।
ततोऽसौ मत्प्रेयानहमपि तदीया सहचरी
ततो याते वर्षे प्रियतममग्र्यं ज्ञातमखिलम् ॥

ततो जनैरपमानितेन तद्भर्त्रा रतिसम्भोगस्त्यक्तः। कालान्तरे यौवनाक्रान्तायां सहचरी दृष्टान्तपूर्वकं ततः कालान्तरमाह(?)—

तन्वी बाला मृदुतनुरियं त्यज्यतामत्र शङ्का
दृष्टा काचिद्भ्रमरभरतो मञ्जरी भिद्यमाना।
तस्मादेषा रहसि भवता निर्दयं पीडनीया
मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समग्रम् ॥

ततस्तेनोक्ता—

मूकीभूय कियत् कियन्न न-गिरा नाद्येति वाग्भिः किय-
न्नेदानीमिति भाषितैरपि कियन्नक्तं नयन्त्या क्रमात्।
अक्षान्तेन मया तथा नीवीहिते[2] पाणौ कुरङ्गीदृशा
किन्नाकारि नवं नवं नवनवानङ्गप्रसङ्गे तया ॥

अपि च—

कविता वनिता चैव आयाता सुख[3]दायिनी।
बलादानीयमाना चेन् सरसा विरसायते ॥

---

1 करैः कररूपैः इत्यर्थः, खरैरिति पाठः साधुः।

2 "मयाथ नीविनिहिते" इति स्यात्।

3 रस इति पाठभेदः क्वचित्।

सखीवाक्येन जातविश्वासं कान्तं प्रकारेण शयानं बोधयति—

यदवधि पुरशत्रोः क्रोधदृष्ट्याऽसि दृष्ट-
स्तदवधि न पुमांसं वाणलक्षीकरोषि ।
अहमपि मदन त्वामुत्सहे द्रष्टुमीदृग्
यदि हृदय (?)शयाना नास्मि पार्श्वे प्रियस्य ॥
निशम्य चैतद्वचनं चुचुम्ब कुचौ सुतुङ्गौ किल मर्दयित्वा ।
अन्योऽन्यमालिङ्गनमाप गाढं शृङ्गारहर्षञ्च ततः प्रलेभे ॥

ततस्तस्यां मौनीभूतायां कुतूहलेन पतिराह—

आस्यं पाणितले निवेशय मनागेतावतैवास्फुटं
वक्त्राम्भोरुह-रोहिणी-रमणयोरास्तां मिथः सङ्गमः ।
मुग्धे किञ्च वचः प्रपञ्चय पिकी मौनव्रते वर्ततां
दाम्भिक्यं विजहातु पञ्चवसुकी[1] ह्रीणातु वीणारवः[2] ॥

ततः प्रातरुत्थाय—

शान्ते मन्मथसङ्गरे रणभृतां सत्कारमातन्वती
वासोऽदाज्जघने सुपीनकुचयोर्हारं श्रुतौ कुण्डलम् ।
बिम्बोष्ठे नववीटिकां सुनयना पाणौ रणत्कङ्कणं
पृष्ठं लम्बिनि केशपाशनिचये युक्तो हि बन्धग्रहः ॥

विदेशगमनार्थं तेन पृच्छ्यमाना सा व्याजेनाह—

मा याहीत्यपमङ्गलं व्रज पते स्नेहेन शून्यं वच-
स्तिष्ठेति प्रभुता यथारुचि कुरु प्रोक्तेऽप्युदासीनता ।
इत्यालोच्य मृगीदृशाऽञ्चलपुटेनाच्छाद्य किञ्चिन्मुखं
व्रीडानम्रतया कदम्बमुकुले दृष्टिः समारोपिता ॥

कालान्तरे विदेशं गच्छन्तं कान्तं प्रत्याह—

अहमिव[भवतो] बहवो मम तु भवानिव भवानेव ।
कुमुदिनीव वनानि कति विधोर्विधुरिव विधुरेव कुमुदिन्याः ॥

---

1 'पञ्जरशुकी' इति स्यात्　　2 'ह्रीणाऽस्तु वीणा रवे' इति स्यात् ।

अपि च—

एकाकिनी नाथ कथं वसामि नेष्यामि नक्तं सदनेऽपि शून्ये ।
घनं विना चातकिनी(?) यथा भोः पतिं विना जीवति कामिनी नो ॥

ततो यामिन्यां—

नक्तं स एवं वदनं ददंश × × × ।
चकार धर्मप्रचयेन युक्तो निवारितः स व्यजनोद्भवानिलैः ॥

ततोऽतिशयमुद्विग्नमनाः सा यामि यामीत्युक्ते पुनरप्याह—

यदि यास्यसि नाथ निश्चितं यामि यामि (?) वचनं हि मा वद ।
अशनेः पतने न वेदना पतनज्ञानमतीव दुःसहम् ॥

ततस्तस्य प्रयाणसमये निश्वासपूर्वकं पुनरप्याह—

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥

ततो बहुकालान्तरे मदनबाणानलदह्यमाना सा कमपि पथिकं प्रत्याह—

हे पान्थ पुस्तकधर क्षणमत्र तिष्ठ
वैद्योऽसि किं गणितशास्त्रविशारदोऽसि ।
केनौषधेन वद पश्यति तस्य माता
कर्ह्यागमिष्यति पतिः सुचिरं प्रवासी ॥

ततस्तदभिप्रायं बुद्ध्वा तया सह रतिसुखं निर्वाणस्य (?) गमनकाले तयोरुत्तरप्रत्युत्तरम्—

प्रस्थानं करवाणि सुन्दरि, समायातीह कादम्बिनी,
छत्रं तिष्ठति, वेगवानतितरामायाति कल्पो मरुत् ।
सह्यः सोऽपि मया प्रयोजनवशात् तत् प्रार्थ्यते किं वद
प्रस्थानं हि तवोपसर्गरहितं भूयादिति प्रार्थये ॥

जारे गच्छति प्रियसखं सम्बोध्याह—

आलीभिः कति निन्दितं गुरुजनै रात्रिन्दिवं भर्त्सितं
गेहस्थैरपमानितं विहसितं शश्वत् सपत्नीजनैः

अङ्गीकृत्य पुनस्तदेव सकलं भावः कृतोऽस्मिञ्जन
आस्तां मे प्रियता भविष्यति सखि ज्वाला ममैतादृशी ॥

प्रियसखीप्रयाणकाले तां प्रति पुनरप्याह—

अदूरे कान्तारं जलदपटलैर्व्याप्तगगनं
विवस्वानश्वानां खुरदलितमस्ताद्रिमकरोत् ।
तथाप्यज्ञः पान्थः प्रसरति न पृष्ट्वापि कमपि
प्रियो मे कुत्रापि प्रवसति सखि त्वां(?) (मरि मरि) ॥

ततः सा सखीं स्थिरापूर्वकं(?) कान्तोक्तमाह—

करे धृत्वा नाथः (कहिल यत) वादः सखि मोरे
अलीकं तत् सर्वं (गणिछि) निज-गर्वे (गेछे वधि) ।
मधौ चेन्नायातः (करिव) तनुपात (स्तोरे कहि)
कुहूकण्ठीनादः (करिल परमादः)[1] प्रियसखि ॥
मनो बन्धं[2] दत्तं प्रियतममनोमूल्यवसुना
स्मरः साक्षी लभ्यं प्रतिदिनमिदं नूतनवयः ।
न लभ्यं तद्वित्तं निजमपि गतं यातु यदभू-
दहो साक्षी कस्मान्निरवधि जनो मां व्यथयति ॥

तां प्रियसख्याह—

विषधरतोऽप्यतिविषमः खल इति मृषा न वदन्ति सन्तः(?) ।
यदयं न कुलद्वेषी स कुलद्वेषी पुनः पिशुनः ॥

पुनः प्रियसखीं प्रत्याह—

रसालमालामुकुलेन्धनेऽस्मिन् प्रकोपिते दक्षिणमारुतेन ।
स्मरानले वैरिणि मे कृशाङ्ग्या ज्वल ज्वलेति ज्वलितं किमङ्गैः ॥

---

1 अत्र ( ) एवं बन्धन्यन्तर्गता भागा वङ्गभाषामयाः । 'वाद' 'तनुपात' शब्दौ च प्रातिपादकांशमात्रेण संस्कृतावपि संस्कृतविभक्तिनियमं नानुरुन्ध इति द्रष्टव्यम् । एवं 'निजगर्वे' शब्दोऽपि । 2 बन्धपदं कर्मप्रत्ययान्तम् ।

ततश्चन्द्रवाण(?)ज्वालेनोद्विजमाना सा चन्द्रं प्रत्याह—

न यातश्चूर्णत्वं कथमहह पाथोधिमथने
न भस्मीभूतोऽसि स्मरविजयिनो नेत्रशिखिना ।
सुधांशो स्वर्भानोरपि कवलनाज्जीवसि यतो
दुरात्मा दीर्घायुर्भवति युगधर्मस्य महिमा ॥

ततो मलयाचलसम्भूतवायुना व्यग्रां प्रति प्रियसख्याह—

कावेरीतीरभूमीरुहभुजगवधूभुक्तमुक्तावशिष्टः
कर्णाटी-चीन-पीनस्तनवसनदशान्दोलनास्पन्दमन्दः ।
लीलालाटीललाटांतकललितलतालास्यलीलाविलोलो
हा कष्टं दाक्षिणात्यः प्रसरति पवनः पान्थकान्ताकृतान्तः ॥

पुनरपि प्रियसखीं प्रत्याह—

वसन्तेऽस्मिन् [काले] प्रियवसतिदेशे सखि न किं
द्विरेफ-क्काणो नो मृदु-मृदु-मरुत् सान्द्रकुसुमम् ।
पिक-क्काणो नो नो युवतिमृदुवाक्यं भवति नो
निशा ज्योत्स्नी कं हत(?) कठिनमुपनार्यः प्रचपलाः ॥

ततो दूतीत्वेन कान्तान्तिकं प्रियसखीं प्रस्थापयन्ती सा कपटवतीं तां प्रश्वासयति—

यद्यप्युपद्रवशतैरभिहन्यमानाः
सन्तस्तथापि शमयन्ति परस्य तापम् ।
भानुर्विधुन्तुदमुखाद् गलितार्धपार्श्वः
पार्श्वान्तरेण जगतां तिमिरं निहन्ति ॥

अपि च—

अहो महत्त्वं महतामपूर्वं विपत्तिकालेऽपि परोपकारः ।
यदास्यमध्ये पतितोऽपि राहोः कलानिधिः पुण्यचयं ददाति ॥

तत्र प्रयाणार्थं सज्जते भवती, तत् कथमिदानीं कपटं करोषि ? पश्य—

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्व्वतानां शिखाग्रे
न चलति खलु वाक्यं सज्जनानां कदाचित्[1] ॥

ततस्तत्प्रयाणसमये सा तां प्रत्याह—

कथमपि सखि गत्वा तत्र युक्तं निवेद्यं
स खलु मम न गच्छेत् तिष्ठतु प्राणनाथः ।
जनयति बहुतापं चन्द्रमाः सर्व्वदाऽत्र
चरति विषमदेशे तस्करस्तस्य बन्धोः ।

ततो दूत्यां गतायामेकाकिनी सा एवमभूत्—

नखानि विधुशङ्कया करतलेन तान्यावृणो-
त्ततः किशलयभ्रमात् करमथाक्षिपद् दूरतः ।
ततो वलयशिञ्जिते भ्रमरगुञ्जिताशङ्कया
उहूरिति कुहूरव-ध्वनिभियाऽतिमूर्छामगात् ॥

ततो दूती [मुखात्]श्रुत्वा झटिति स्वगृहमागतः स मूर्छापन्नां तामालिङ्गितवान् । ततः परेद्युर्दूत्यागत्य इदानीं भवती चन्द्रादिकं किम्भूतमनुभवति ? सा प्रत्याह—

चन्द्रः पूर्वं दयितविरहे चण्डभानुर्ममासी-
न्मन्दोऽप्यासीन्मलयपवनो मर्मभेदीव वज्रः ।
कल्पप्राया रजनिरभवत् कान्तयोगादिदानीं
चन्द्रश्चन्द्रो मरुदिव मरुद् यामिनी यामिनीव ॥

इति भरतकृता कौतुकमञ्जरी समाप्ता ॥

युवतिकुचनिचोले यादृशी मे मतिः स्याद्
भवतु तव पदाब्जे तादृशी दीनबन्धो ।

1 तथापि इत्यपि पाठान्तरम् ।

युवतिविरहभङ्गे यत् सुखं स्यात् सदैव
तव पदहृदिलग्ने(?) तद्धि काङ्क्षा न चान्यत् ॥
भेको धावति गर्जिते नवघने हृष्टः पतङ्गं प्रति
तं भेकं प्रति कालकूटगरली तञ्च द्विजिह्वं शिखी ।
तञ्चेत् खेटिक एष धावति पुनर्व्याघ्रस्तथा खेटिकम्
इत्यन्योऽन्यवधानुरागरसिको नात्मक्षयं पश्यति ॥
यां चिन्तां तनुषेऽत्र पुत्रभरणव्यापारसम्मोहने
यां चिन्तां धनधान्यभूरियशसां लाभे विजेतुं रिपुम् ।
सा चिन्ता यदि नन्दनन्दनपदद्वन्द्वारविन्दे सक्तत्
का चिन्ता यमराजभीतिभवनद्वारप्रयाणे तदा ॥

---

## दुर्गतपरिदेवनम्

[ निबन्धकः—श्रीप्रमथेश-तर्करत्नः ]

तरलत्वेन वित्तं प्राग् विद्वद्भिर्यत् तृणीकृतम् ।
ज्ञात्वा तदधुना विद्वान् वित्तेन परिभूयते ॥१॥
"अर्थाः पादरजोपमा" इति तिरस्कारं पुरा भारते
विज्ञानां परमार्थमात्रविदुषामर्थाश्चिरं सेहिरे ।
मन्ये तत् प्रतिकर्तुमद्य त इमे सम्यग् यतन्ते न चेत्
ते विज्ञाः किमु निस्वतामिह गतास्त्वन्ये धनस्वामिनः ॥२॥
हरे ! सर्वकामप्रदोऽसीति मन्ये
मुनीनां मृषोद्यं यतः प्रार्थिने मे ।
श्रियं दैन्यविध्वंसिनीं नो ददासि
स्वकीयां प्रियां को विहातुं समर्थः ॥३॥

---

# श्रीदुर्गास्तवः

[ निबन्धकः—कौण्डिन्य-वेङ्कटेश्वर-सुब्रह्मण्यशास्त्री ]

दुर्गां देवीं शरणमनिशं संप्रपद्ये ऽहमंबां
कालीं कालान्तकपतिमुमामेणदृक्पूज्यमानाम् ।
ईड्यां लक्ष्मी-द्रुहिणमहिषीसेव्यमानांघ्रियुग्मां
ह्रींकाराख्यांबुजमधुकरीं हंससेव्यां सदाख्याम् ॥१॥
गाढाविद्यातिमिरदलने चन्द्रिका कल्पवल्ली
पादांभोजे निहितमनसां वांछितार्थप्रदाने ।
कामारातेर्हृदयहरिणी पोतरूपा भवाब्धेः
पारं यातां मनसि ललितां तां सदा भावये ह्रीम् ॥२॥
देवीं दुर्गां विनतजनताकामदोग्ध्रीं सवित्रीं
कामेशालिंगिततनुमुमां लास्यतुष्टां भवानीम् ।
ह्रींकाराख्यप्रसवमधुपां श्रीशसंपूज्यमाना-
मापन्नार्तिप्रशमनकरामिन्दुचूडां नमामः ॥३॥
वीतक्रोधैर्मुनिभिरनिशं लक्ष्यते या प्रपञ्चं
सूते येमं बहुविधमथो पाति या हन्ति चान्ते ।
या कल्पान्ते विहरति हरेणात्मना येन दुर्गा
तां सर्वार्तिप्रशमनकरामिन्दुचूडां नमामः ॥४॥
शान्तस्वान्तैर्मनसि सततं चिन्त्यते या मुनीन्द्रै-
रेकान्तस्थैर्नियमितमनोवृत्तिभिर्योगिवर्यैः ।
या स्वात्मेति प्रतिदिनमथो दृश्यते निर्विकल्पे
तां सर्वार्तिप्रशमनकरामिन्दुचूडां नमामः ॥५॥
रामाराध्या रहसि भजतां रंहसा पापहन्त्री
राकाचन्द्रप्रतिमवदना या बुधैर्वर्ण्यतेऽम्बा ।
रामा रायं दिशति नमतां कल्पवल्लीव माता
तां सर्वार्तिप्रशमनकरामिन्दुचूडां नमामः ॥६॥

आपूर्णं यं जननि शिशिरं तावकं दृष्टिपातं
लब्ध्वा भक्तो वशयति जगत्सर्वमेतद्धि भक्त्या ।
तस्माद्भक्तिं तव चरणयोस्सन्ततं संप्रदेहि
त्रैलोक्यार्तिप्रशमनपटुं मोहनाशाय दुर्गे ।७॥
अन्तं यस्या विधिहरिमुखा जानतेऽद्धा न चादिं
मर्त्या वेत्तुं मलिनहृदयाः किं वयं पारयामः ।
किन्तु क्रीडा शिशुकविहिता मातुरिष्टा हि तस्माद्
राजीवाभं पदयुगमहं भावये हैमवत्याः ॥८॥
हर्यक्षस्था महिषदनुजं याऽवधीच्चण्डमुण्डौ
चामुण्डेति प्रथितविभवाऽनन्तरं शुंभदैत्यम् ।
हत्वा तस्यासुरबलमथो भ्रातरं स्तूयते या
देवैः पश्चाद्वितरतु शुभं दुःखहन्त्र्यंबिका सा ॥९॥
प्राहुर्माया सकलजगतां कारणं सा च या त्वं
याञ्च ध्यात्वा विगलिततमोग्रन्थयो यां तरन्ति ।
सा मे तस्यास्तरणसुलभं मार्गमंबा प्रदिश्याच्
चूडोत्तंसीकृतविधुकला वाग्रमा-सेव्यमाना ॥१०॥
पायादंभोरुहसममुखा पालिताशेषलोका
विद्याविद्या बहुविधजगद्रूपिणी सत्यरूपा ।
याऽग्रे भूतान्यसृजदथ या नामरूपप्रभेदं
व्याकार्षीद्या निखिलभुवनं संहरत्यन्तकाले ॥११॥
द्यावाभूमिं किरणनिवहैर्भासयन्तीं स्वकीयैः
कृष्णाराध्यां सकलजनताभीष्टदां कल्पवल्लीम् ।
यामाराध्य प्रथितविभवां सर्वदुःखाद्विमुक्ता
मोदन्ते स्वे जननरहिते तां प्रपद्येऽहमम्बाम् ॥१२॥

---

# युगधर्मसंस्थापकः श्रीरामकृष्णः

[ निबन्धकः—स्वामी जगन्नाथानन्दः ]

महद् यक्षं भुवनस्य मध्ये तपसि क्रान्तं सलिलस्य पृष्ठे ।
तस्मिन् छ्रयन्ते य उ के च देवा वृक्षस्य स्कन्दः परित इव शाखा ॥

अथर्ववेदे ।

कारणात् कार्योद्भवः, कारणाभावात् कार्याभाव इति न्यायः। तेन कार्यकारणसम्बन्धेन कालचक्रस्यावर्तनादिह संसारे सर्वपदार्थानां चलत्वात् परिणामित्वाच्च फलमपि चलं भवति।

इह जगत्यवतारा आचार्याश्च यदा धर्मस्य ग्लानिर्भवति तदा भूयो भूय आगत्य भवाब्धौ मग्नाँल्लोकान् सन्मार्गं प्रदर्शयन्ति। अथेश्वरस्याघटन-घटन-पटीयसी महामाया, स्वप्रभावेण तरङ्ग-बुद्-बुद-फेन-न्यायेन आच्छादयति संसारम्। एवं पुनः पुनरीश्वरो भूतानुजिघृक्षया लीलाकैवल्येन च स्वरूपलावण्यमयमूर्तिं स्वीकृत्याविर्भवति, जगत् परिरक्षति च। एवं सति काले प्रयाते कलिविप्लवेन रागग्राहोग्रे सम्मोहजले भवाब्धौ मज्जत्सु जनेषु सर्वसत्त्वोपकृतिवाञ्छया कश्चिन्महापुरुषो वङ्गप्रदेशे "कामारपुकुर"ग्रामे ब्राह्मणकुले क्षुदिराम-चट्टोपाध्यायस्य पत्न्यां चन्द्रामणिसमाख्यायाम् आविर्बभूव। दशमासेषु व्यतीतेषु फाल्गुने मासि द्वितीयायां तिथौ उषसः किञ्चित् पूर्वम् भगवान् रामकृष्णो मातुर्जठरादवततार।

यथोदितं चन्द्रं दृष्ट्वा सागरोर्मी हर्षम् प्राप्नोति तथा तं विलोक्य वसुन्धरा परं धन्याऽभूत्। दिशः सर्वाः प्रसन्नतामापुः। मन्दं मन्दं शुभशंसी समीरणो ववौ। पार्वणचन्द्रसदृशं राजीवलोचनं सुन्दर-सन्निवेशं बालकं दृष्ट्वा ग्रामवासिनः पुरवासिनश्चात्यन्तमाह्लादिता बभूवुः। अवतीर्णस्य तस्य बान्धवैर्गदाधर इति बाल्यावस्थायां नाम विदधे। एवं

शशिकलावद्वर्द्धितं पञ्चपवर्षदेशीयं तं शिशुं विद्यालये शिक्षार्थं पितरौ प्रेरितवन्तौ। आजन्म ईश्वरे तीव्रानुरागवशात् पूर्णवैराग्यवशाच्च गदाधरो विद्यालयं गत्वा विद्याभ्यासे मानसं न निदधे।

"भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं,
मौने दैन्यभयं बले रिपुभयं रूपे जाराया भयम्।
शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं,
सर्वं वस्तु भयान्वितं भुवि महावैराग्यमेवाभयम्॥"

इति भर्त्तृहरिणा उक्तम्,

"शब्दझरी वाग्वैखरी शास्त्रव्याख्यानकौशलम्।
वैदुष्यं विदुषां तद्वद् भुक्तये न तु मुक्तये॥"

"यस्तन्न वेद किमृचा करिष्यति।" इत्यादिचैवम्प्रकारेणालोचयतस्तस्य आ जन्मनः परमात्मतत्त्वव्यतिरेकेण अन्यत्र कुत्रापि विषये मनो न गतम्। तैलधारावदनवच्छिन्ना एका चिन्ता आसीत्। यथा अजातपक्षाः क्षुधिता बालाः स्वमातरमुपासते मातृगतप्राणाश्च भवन्ति, तद्वत् स गदाधर ईश्वरगतप्राण आसीत्। अपि च धर्माधर्मवशात् पौनःपुन्येन परिवर्त्तिनि जरामरणयुतसंसारचक्रे कः पुमान् नेतः प्रैति मृतो वा न पुनरायाति। अपि तु सर्वो जन्तुरुत्पन्नो मृतश्च भवत्यवश्यम्। ये तु ब्रह्मविद्याविशारदाः साधनचतुष्टयसम्पन्नास्ते केवलेनेश्वरप्राप्तिद्वारेण जरामरणजं भयं जयन्ति। ततश्च स यदा एकादशवर्षो भूतस्तदा स्त्रीबालैः सह विशालाक्षीनाम्नीं ग्राम्यदेवीं द्रष्टुम् पथि गच्छन् अकस्मात् ज्योतिर्मयं पुरुषं ददर्श; तदास्य बाह्यसंज्ञा नासीत्; दिग्देशकालास्तिरोदधिरे तस्मात्; स समाधिमग्नो बभूव। स्वमुखेन तेनोक्तमेतत्। "ईश्वरकल्पपुरुषाणाम् अवताराणां च अग्रे फलं भवति पश्चात् पुष्पम्। यथा कुष्माण्डस्य लताया अग्रे फलानि भवन्ति पश्चात् पुष्पाणि जायन्ते तद्वत्"।

ईश्वरलाभः पश्चात् स्वप्रयोजनाभावेऽपि लोकशिक्षार्थं साधनानि तपांसि च स्वयं सन्निहितानि भवन्ति। अपि च उक्तं तेन स्वपार्श्वदान् भक्तान्

प्रति "अये ! मम पिता यदा गयाधाम गत्वा स्वपितृपुरुषान् उद्दिश्य पिण्डं ददौ तत्र रात्रौ गयाधीश्वरश्चतुर्भुजो भगवान् गदाधरः स्वप्रदर्शितमूर्तिर्मम पितरमुपदिदेश—अहो ! तव पुत्रोऽहं भविष्यामि। स्वप्ने पिता भयविह्वलचित्तः सन् एतदुक्तवान्—हे प्रभो, निर्धनोऽहम् ब्राह्मणः केन उपायेन केन उपकरणेन वा अर्चयामि भगवन्तं त्वाम् , न जाने साधनं पूजनञ्च। तच्छ्रुत्वा भगवान् गदाधर उवाच, मा भैषीर्ब्राह्मण ! मत्सेवोपायः सर्वस्ते सुकरो भविष्यति, चिन्तां मा कार्षीः, एवमुक्त्वा तिरोदधे। स एव भगवान् गदाधरः प्रथितः पुरुषोत्तमो भूत्वा गदाधरनाम्ना अवन्यां प्रजातः। गदाधरादागतः पुत्र इत्यतः पिता बाल्यनाम गदाधर इति चक्रे। अवतारपुरुषपरिज्ञानं सर्वथा दुर्लभं भवति जनानाम्। केवलं विलक्षण-भाग्ययोगात् कोऽपि कदापि तं वेत्ति। यथा च "कोऽद्धा वेद यदि वा न वेद"। यथा वारिचराणां नभश्चराणां च पदचिह्नं द्रष्टुमशक्यम्। तद्वत् अवतारपुरुषाणां ब्रह्मविदां ज्ञानिनां गतिरपि दुर्गमा इति नात्र विवदितव्यमस्ति।

यस्य भगवन्नामश्रवणमात्रेण मुहुर्मुहुः समाधिष्वतिदुर्विगाहभावमहाभावप्रेमाद्यवस्थाः स्वत एव बभुवुः, काञ्चनस्पर्शमात्रेण यस्याङ्गानि विकलानि बभूवुः यस्य च शृण्वतो वेदान्तवाक्यं दिनत्रयेण निर्विकल्पकं सामाधिमापन्नस्य पुनरनुदिनमाविर्बभूव सुदुर्लभा समाधिधारा।

तस्याशेषभूमण्डलप्रथितसिद्धिमहिम्नः समाधीश्वरस्य श्रीरामकृष्णस्यालौकिकपवित्रज्ञानकर्मोपदेशपीयूषास्वादेन कृतार्थाः कलिमलहताः प्रायेण जनास्तदीयं शास्त्राचारपूतं कर्मचयं स्मारं स्मारं मुहुरीश्वरबुद्ध्या तं नंनम्यन्ते, नहि तस्येश्वरता प्रमाणापेक्षा। यतो नहि हालिका अपि प्रचण्डभास्करम् अङ्गुल्या निर्दिश्य ज्ञापयितव्या भवन्ति, अयं सूर्य इति। परन्तु आदित्यरश्मिजालविस्तारेण प्रभाकरं ते स्वयं समधिगच्छन्ति। अथ पितरि लोकान्तरम् गतवति अष्टादशवर्षवयस्कः स भ्रात्रा स्वज्येष्ठेन सह कलिकातानगर्याम् आगत्य राणीरासमणिनामधेयायाः कस्याश्चित् कालीमन्दिरे दक्षिणे-

श्वरे भगवतीं कालिकादेवीं पूजयितुं नियुक्तो बभूव। एवं पूजां कुर्वन् कतिपये मासि व्यतीते परदेवतायां मातरि परानुरक्तिवशाद् वाह्यपूजायां लुप्ताग्रहोबभूव।

तदानीमुक्तं सादरं तेन यत् परदेवताऽस्ति मातेत्यत्र सन्देहो न विधेयः। परन्तु मातृपदमद्वयनिर्विशेषब्रह्मपरमेव ततश्च 'मा' इत्यक्षरद्वयेन मातेत्यनेन पदेन वा वाच्यस्यार्थस्याभेदं विज्ञाय तथोच्यते मया।

अथ वाह्यपूजायाम् असमर्थः सन् नैरन्तर्येण अहरहः स तद्गतप्राणः सन् क्वचिद् बालकवत्, जडवत्, क्वचित् पिशाचवद् उन्मादवद् वा विचचार। सदैव हा मातः! हा मातः!! इति वदतिस्म। द्वादशवर्षाणि विभिन्न-सम्प्रदायानां यानि साधनानि तानि अवलम्ब्य तपश्चकार।

एवं तपः कुर्वन् गभीरध्यानसमये चित्तवृत्तिमतीतः सन् विभिन्नसम्प्रदायेषु या इष्टदेवता आसन् तासाम् अतीन्द्रियाणि रूपाणि अपश्यत्। यथा रामलक्ष्मणौ, रथे कृष्णार्जुनौ, सीतां कालीं दुर्गामूर्त्तिञ्च। ततश्च परिव्राजकाचार्यश्रीमत्तोतापुरीत्याख्य-वेदान्ततत्त्वज्ञानविशारदस्य महात्मनः सकाशाद् वेदान्ततत्त्वं शुश्राव। तस्मात् सन्न्यासं जग्राह च। वेदान्तं शृण्वन् निर्विकल्पसमाधिं प्राप।

तथा दृष्ट्वा वेदान्ततत्त्वनिपुणः श्रीमत्तोतापुरी आश्चर्यान्वितो बभूव। उक्तञ्च तेन यत्—समाधिश्चत्वारिंशता वर्षैः कठोरतपसा प्राप्तो मया, अयं पुरुषो दिवसत्रयेण तस्य परां काष्ठां प्राप्तवान्। कोऽयं पुरुषः? अद्भुतमिदं चरितमस्य न दृष्टं न श्रुतं वा। अथ तथा विस्मित आचार्यः स तस्य श्रीरामकृष्णपरमहंस इति नाम विदधे सहर्षम्। यदा सर्वाणि साधनानि समाप्तानि, तथा तस्य समाप्तिमाप समाधिः तदा स रामकृष्णो जगन्मातरमवादीत्—यास्याम्यहम् स्वधाम; किं प्रयोजनमनेन शरीरेण। कामकाञ्चनाशक्तिमता सह स्थातुं न शक्नोमि। एतच्छ्रुत्वा जगदाधारभूता आद्या शक्तिर्जगज्जननी तमुवाच। हे वत्स! तिष्ठ कञ्चित् कालम्, सर्वे शुद्धाः पूताः कामकाञ्चनरहिता भक्ता आगमिष्यन्ति। तान् भक्तान् उपदिश्य स्वधाम उपैष्यसि। (क्रमशः)

# सारस्वतसमाजस्य योषित्सु पुंस्त्वभ्रमः (?)

[ निबन्धिका—कुमारी श्रीलीलावती दासजा ]

एकषष्ट्युत्तराष्टादशशकाब्दीयायां (१८६१) यथोक्तसमाजस्य लघुकौमुद्या आद्यपरीक्षायां (यद्यपीयं परीक्षा वर्तमानवर्षीयापि भूयसा द्विषष्ट्युत्तराष्टादशशकाब्द एवास्ति निरूपिता) अवतितीर्षुरहं यथाकाल-मासादितवत्यनुमतिपत्रिकाम्। तत्र चायं श्लोको वर्तते—

"पूर्ववङ्गप्रदेशीय-सारस्वत-समाजतः।
तुभ्यमनुमतिः श्रीमन् परीक्षायै प्रदीयते॥"

इति। अत्र च तृतीयचरणे छन्दोलक्षणमक्षुण्णमपि बन्धशैथिल्यात्मना दोषेण संसृज्यमानं छन्दोविदां महान्तमुद्वेगमुपजनयति। श्रूयते प्रागत्र "मया तेऽनुमति" रित्यासीत्, न जाने कीदृशं दोषमाकलय्येदानीन्तनैः समाजाधिकृतैः पाठायास्मै जलाञ्जलिर्दत्त इति। यातु, प्रकृतमनुसरामि।

रमण्यहं परीक्षार्थिनी चिराय श्रवणाभ्यां 'श्रीमती'ति पदं रोचयन्ती हठादद्य 'श्रीमन्' इति सम्बोधन-पदं दृष्ट्वा किञ्चिदिव विह्वलास्मि संवृत्ता। किं तावन्ममैवाधन्याया लेखदोषान्नामपदे अनतिस्फुटं स्त्रीत्वमुपजीव्य भ्रमोऽयं श्लोककर्तर्यात्मानमलभतेति प्रथमं मे चिन्ताभूत्। परं निपुणं विभाव्यापि तथाविधं किमपि स्खलितमस्मरन्ती, सारस्वत-समाजाधिकृतानामेवेदमकौशल-मित्यन्ततश्चेतयन्ती कथञ्चित् स्वास्थ्यमन्वभवम्। परं तथापि विस्मयमुपा-सीना मनसैवेदमालोचितवती—मन्ये श्लोककर्तुः स्वप्नेऽप्यगोचर आसीदसौ वृत्तान्तो यत् तत्प्रवर्तितायां परीक्षायां रमण्यपि कदाचित् करपल्लवं व्यापारयेदिति, कथमन्यथा स पुरुषमात्रविश्रान्तं सम्बोधनान्तं 'श्रीमन्नि'ति पदम् अनुमतिपत्रे आददीत किमत्रैतत्पदप्रत्याहारेण स्त्रीपुंससाधारणं किञ्चन पदमशक्यसन्निवेशमासीत् श्लोककर्तुः? न चैकशेषेणोभयलाभादसतीयं

कल्पना कथं क्रियतामिति वाच्यं तथात्वे बहुवचनस्य वारयितुमशक्यत्वात्। निर्बन्धाम्यहं समाजाधिकृतानामन्येषाञ्च संस्कृत-साहित्य-परिषत्-सदस्यानामस्य यथोचितोत्तरदानायेति शम्।

---

## ग्रन्थनिकषः

**Elements of Hindu Culture and Sanskrit Civilisation :**

By

Prasanna Kumar Acharya, I. E. S., M. A. (Cal.),
Ph. D. (Leiden), D. Litt (London),
Professor and Head of the Sanskrit Department,
Allahabad University.

pp. 184, Price Re. 1/8

सानन्दं स्वीकृतवन्तो वयं ग्रन्थरत्नमिदम्। भारतवर्षस्य प्राचीनतमायाः कृष्टेः सभ्यतायाश्च कीदृशं रूपमासीदिति प्रदर्शनमेव ग्रन्थकर्तुरुद्देश्यम्। समयोपयोगिनं ग्रन्थमिममालोच्य न केवलं छात्रास्तेषामध्यापकाश्च लाभमनुभवेयुरित्यत्र नास्ति संशयलेशोऽपि। आर. सि. दत्त, जुनियासु जलि, आर. के. मुखार्जि, आर. सि. मजुमदार-मुखा मनीषिण आर्याणां कृष्टेः सभ्यतायाश्चैकैकशो दिशः सम्यक् प्रादर्शयन्। अयञ्च ग्रन्थकारस्तस्यानतिमहति ग्रन्थे तयोः कृष्टि-सभ्यतयोः समग्रं रूपं पूर्णतया प्रकाशयितुं प्रायस्यत। कर्तव्येऽस्मिन् अगत्याऽनेकत्रैव तेन स्वीकृतायामपि संक्षिप्ततायां लेखनीनैपुण्येन कस्यापि विषयस्य कापि वर्णना नीरसतां नासादयत। वयमस्य ग्रन्थस्य बहुलं प्रचारं कामयामहे। इति

परीक्षकः

श्रीअमरेश्वरठाकुर-वेदान्तशास्त्री, एम्. ए., पी-एइच्. डि.

---

पदे पदे विश्रमरत्नवेदिका विकीर्णपुष्पाः स्वत एव पादपैः ।
विशीर्णपर्णानि समीरपीडनात् ततो बहिः प्रच्युतिमन्ति दैवतः ॥४८॥
स्थिता प्रसूनाचितपादपावली विलासकुञ्जे पथिपार्श्वयोस्ततः ।
प्रयाणरथ्यासु सुवर्णवालुकाप्रसारणा पङ्कनिरोधसाधिका ॥४९॥
जगाम रथ्या तुलसीद्रुमाचिता सरोवरं यावदतीव विस्तृता ।
जलावतारस्तदनन्तरं परः सुरत्नपीठैरुपकल्पितो बभौ ॥५०॥
प्रत्यष्टपीठोत्तरमस्ति निष्ठितो महाप्रणाहो मणिपीठ उत्तमः ।
प्रगे तथा सायमुपात्तमुक्तयः सुसङ्गता यत्र हरिं स्मरन्त्यलम् ॥५१॥
सोपानपार्श्वद्वयसन्निवेशिताः प्रसूनवृक्षा मणिवेदिकोच्चिताः ।
तदन्तराले तुलसीमहीरुहास्ततोऽपि तेषां नवदिव्यमञ्जरी ॥५२॥
तरङ्गिता मन्दसमीरणेरिता विशुद्धनीरा सुविशालवापिका ।
विवस्वतः शोणकरानुषञ्जनाद् बभौ विभाते कनकद्रवैरिव ॥५३॥
तथैव मध्यं नभसो गते रवौ गभस्तिमालाच्छुरिते जलोच्चये ।
हुताशनाभिद्रुतरौप्यधारया समां दधारोज्ज्वलरूपपद्धतिम् ॥५४॥
समुच्छलच्चारुतरङ्गरङ्गिणी जलेचरानन्दसुधाप्रसाधिनी ।
मिलिन्दमालाप्रचितारविन्दिनी न वापिका कस्य सुखाय हारिणी ॥५५॥
सुनीलरत्नस्तवकैर्वसुन्धरा निरूढबन्धा सरसीजलान्तरे ।
जलादधश्चापि सुवर्णरेणवो लसन्ति पादस्खलनापनुत्तये ॥५६॥
जलात् परं श्यामलशष्पमालया चिता कियद्दूरमभूत् सरस्तटी ।
समानशीर्षोच्छ्रयबालपादपास्तदुत्तरं सत्कुसुमाः सुदर्शनाः ॥५७॥
ततो बहिः प्रौढरसालशाखिनां समागमादुच्छ्रितशीर्षशालिनाम् ।
अकालसम्भूतफलानुषङ्गिणां त्रिलोकभावोत्तरता विराजते ॥५८॥
ततः परं तत्सहकारशीर्षतः समुच्छ्रिताग्रा बहुपूगपादपाः ।
प्रभूतरक्तप्रसवोपचारिणः पदे प्रदित्सन्ति हरेरुपायनम् ॥५९॥
तदूर्ध्वमूर्ध्वोन्नतमूर्धभागिनः फलातिभारैरिव नम्रविग्रहाः ।
सुदूरविस्तीर्णभुजाः परस्परं परिष्वजन्ते किल नारिकेलकाः ॥६०॥

ततः परं रक्तफलोपबृंहिताः सुदीर्घकायाः खलु तालपादपाः ।
समीरचञ्चत्तरपत्रसञ्चयाः प्रवीजयन्तीव हरेः पदाम्बुजम् ॥६१॥
तस्मात् परं शालसमानमुच्छ्रिता प्राकारभित्तिः कनकेन निर्मिता ।
वैदूर्यमुक्तानिचिता समन्ततः सुविस्तृता निन्दति मेरुभूधरम् ॥६२॥
क्रमावनम्रास्तरवश्चतुर्दिशं वितत्य सोपानसमानतां दधुः ।
प्राकारवेशाञ्चितमेरुभूधराद् दिवौकसां सङ्गतये सरोवरे ॥६३॥
यदीयपादाब्जभवा हि जाह्नवी त्रिलोकपङ्कोद्धरणोद्धुरा चिरम् ।
स यत्र नीरे कृतभूरिकौतुकः कथं भवेत्तत्र न पङ्कहीनता ॥६४॥
तथापि तत्रेशविभूतिवैभवात सहस्रपत्रं जनिमेति पङ्कजम् ।
न तद्विकाशस्तपनं व्यपेक्षते ततः स्मितं तत्र लसत्यहर्निशम् ॥६५॥
कुमुद्वती पश्यति हास्यविह्वला सुपुण्ययोगादिह पङ्कजस्मितम् ।
कुमुद्वतीहासमवैति पङ्कजम् असम्भवं भावयते हरेः कृपा ॥६६॥
कुमुद्वती भाति विनैव कौमुदीं स्थिरप्रसादा पतिता सरोवरे ।
प्रभूतपुण्याचरणेन जन्तवः परं पदं यान्ति न तत्र विस्मयः ॥६७॥
समीरभङ्गीसहिते तरङ्गिते कृतप्लवास्तत्र मरालमालिकाः ।
सरोरुहस्तम्बकदम्बसम्भवां श्रियं विलासादुपभुञ्जते रहः ॥६८॥
चिराय मन्दानिलचालिताचलात् प्रसूनरेणुप्रकरा विधूनिताः ।
निपत्य शुद्धस्फटिकोपलामले सरोजले सैकतभावमाश्रिताः ॥६९॥
प्रभातकालावधि बाधशून्यया सभक्तिनारायण-पादपूजया ।
जलावताराः प्रतिपारमाकुलाः प्रसूनपङ्केरुहचन्दनादिभिः ॥७०॥
विधाय कायान् बहुधा दिवाधवस्तपःप्रभावादिव तज्जलाशये ।
समेत्य मग्नः सुखभोगहेतवे तरङ्गरङ्गप्रतिबिम्बकैतवात् ॥७१॥
झषा यशोधाम तदद्भुतं सरः प्रविश्य विश्वोत्तरहर्षकर्षिताः ।
तटान्तमासाद्य निरास्पदापदो भजन्ति भोज्यानि जनानुकम्पया ॥७२॥
पुरोत्तमे तत्र विलक्षणक्रमे किमेव वा नास्ति यदुत्तमायते ।
यतः पतिः श्रीपतिरादिपूरुषः स्वयं रमा चापि गृहाधिकारिणी ॥७३॥

कौमोदकीपङ्कजचक्रनन्दकैः सुचित्रितैस्तोरणमस्ति चिह्नितम् ।
न तत्र दौवारिकदण्डबाधना जनार्दने भक्तिमतां विविक्षताम् ॥७४॥
क्रमादथो दिव्यविमानशोभनं विवेश वैकुण्ठपुरस्य तोरणम् ।
सुतालवीणास्वरमाधुरीधरः स नारदः शाश्वतयोगसुन्दरः ॥७५॥
पदे पदे पादपयोजपूजनं विधाय तं मानयतां तपस्विनाम् ।
प्रयुज्य निश्रेयसवादमादराद् उपाससाद स्वमभीष्टमच्युतम् ॥७६॥
क्रियाविशेषाय कृतस्मृतिः कृती मुनीश्वरस्तत्र हरेरुपान्तिके ।
समेत्य सूक्तैर्विहितोचितस्तुतिः प्रसादयामास तमासनोषितम् ॥७७॥
प्रसीद मायापरिमुक्त सर्वतः सुपर्वगर्वैकनिदान सद्गते ।
किमेष दासः स्मृतिगोचरीकृतस्तदेव विज्ञातुमयं कुतूहली ॥७८॥
नियुज्यतामेष नियोगवर्त्मना सुपुण्यलभ्येन शुभानुवर्तिना ।
निवर्ततां प्रश्नभवं कुतूहलं प्रवर्ततां किञ्चन सत्त्वमंगलम् ॥७९॥
नारायणस्तदनु नारदमान्तरज्ञ' दृष्ट्वा समीपचरमादरपूर्णदृष्टिः ।
उत्थाय पूतकनकासनमस्य हेतोरुन्नीय पुण्यवचनं रचयाञ्चकार ॥८०॥

इति श्रीकालीपदतर्काचार्यकृते सत्यानुभावमहाकाव्ये
नारदवैकुण्ठप्रवेशो नाम तृतीयसर्गः ॥३॥

## चतुर्थसर्गः

अथ यदा मधुराधरचातुरी वितरणाय वृता खलु भारती ।
परिजहार तदा कमलाकृतं मलिनिमानमसीमगुणोदया ॥१॥
यदि सपत्निकया चिरमाहृतं दयितचित्तमधीनयितुं क्षमे ।
इति मतेरिव दोषपरिच्युता लसदलङ्करणाऽजनि कोमला ॥२॥
रसवती प्रियवर्णविलक्षणा विविधशक्तिमती शुभलक्षणा ।
कविजनादृतभावविभाविता सुमधुरध्वनिपूर्णपदक्रमा ॥३॥
अमलरीतिरमन्दविभावना मिलनहेतुसमुच्चयशालिनी ।
भगवता समतानि सरस्वती स्मितलवं विरचय्य निजाधरे ॥४॥

विधिज्ञ वेत्सि विलक्षणमात्मना मम मनोगतमागतवान् यतः ।
तदपि किं परिपृच्छसि मुग्धवद् विनयिनामथवा गतिरीदृशी ॥५॥
प्रतिपदं विपदामपनोदने जगति योगिमतस्त्वमपेक्षितः ।
कृषिधनेन पवित्रयितुं यथा निचितशालिगणाननिलागमः ॥६॥
इयदनेहसमीश इति स्तुतो जगदिदं यदहं समपालयम् ।
नहि ततो मम काचन चातुरी प्रभुरभूद् भवतां सुनयोदयः ॥७॥
प्रथमतो वृतदस्युकृतिक्षणं विहितवानसि पुण्यपथे रतम् ।
तदनु सोऽभवदादिकविर्भवे निखिलकाव्यकृतामवलम्बनम् ॥८॥
जनकरागपरिच्युतिवीक्षया विनयवानभिमानवशं गतः ।
विजनकाननभूमिमुपाश्रितो मम गवेषणकृत्यकृते ध्रुवः ॥९॥
क्व मधुसूदन दासजनो ह्ययं तव पदाम्बुजदर्शनभाग् भवेत् ।
क्व नु भवन्मुरलीध्वनिमाधुरी श्रवणभाग्यमुपैतु मम श्रुतिः ॥१०॥
रजनिरेति दिनात् परमञ्जसा दिनमुपैति निशाविगमे तथा ।
तव विलोकनकल्पनयाऽन्वहं कति चिरं समया वत यापिताः ॥११॥
यदयमेति वने मलयानिलः सुरभिभारसमागमसङ्कुलः ।
स यदि तावकविग्रहमार्जनात् सुरभिरित्यभवन्मम शान्तिदः ॥१२॥
प्रतितरौ विकसत्कुसुमावलीं सपदि वीक्ष्य तव स्मितमुन्नये ।
मधु च कौसुममास्यसुधालवं परिचिनोमि तव प्रणयी चिरम् ॥१३॥
चिरमसौ जननी मम दुःखिनी विजनभूमिमनीयत भाग्यतः ।
कुरु तदीयविषादविमोचनं करुणया परिदर्शय विग्रहम् ॥१४॥
कुटिलकुन्तलजालसमाकुलं ललितपत्रविशेषकमञ्जुलम् ।
मधुरवेणुनिनादयुताधरम् त्रितयभङ्गशरीरमनोहरम् ॥१५॥
विमलमौक्तिककौस्तुभशोभनं भृगुपदाङ्कसमङ्कितवक्षसम् ।
खचितकण्ठतटं वनमालया गलविलम्बितपीतवराम्बरम् ॥१६॥
कटितटे मणिमालिकयाऽन्विते कनकवर्णदुकूलनिबन्धना ।
रुचिरकान्तिरनन्तमनोहरा क्व नु मया समये परिदृश्यताम् ॥१७॥

मृदुलवामपदोपरि दक्षिणं विनिदधत् पदपङ्कजमुज्ज्वलम् ।
लसदलक्तकरागमधोमुखं कनकनूपुरशोभि दृशं श्रयेः ॥१८॥
सुरसरित्प्रभवं भवबन्धनप्रलयसाधनमाकुलषट्पदम् ।
सुरमहर्षिगणैरुपसेवितं तव पदाम्बुजमेष कदा लभे ॥१९॥
भ्रमररञ्जितमध्यसितोत्पलद्युतिमुषा नयनेन दयाभृता ।
वद कदा तव दासजनो ह्ययं व्रजतु सङ्गतिमङ्ग दयानिधे ! ॥२०॥
दिशि दिशि प्रचरन्ति भयावहा रुधिरपानसमुत्सुकमानसाः ।
वृकगणा विकटोत्कटनादिनः सपदि केशरिगर्जितमूर्जितम् ॥२१॥
तिमिरभारभयङ्करकानने जनवियोगिनि भूधरसङ्कुले ।
त्वमसि मे जनबान्धव सम्बलं वितर पादपयोरुहदर्शनम् ॥२२॥
श्रुतमिदं जननीवदनान्मया त्वमगतेरसि शाश्वतसम्बलम् ।
किमथ मामगतिं परिपश्यता पदयुगं भवताऽत्र न दीयते ? ॥२३॥
यदि निधेयमितश्चरणद्वयं किमिति कालविलम्बनमिष्यते ।
अथ न ते करुणा मयि बालके नहि भवामि ततः क्षणतः परम् ॥२४॥
वसति मे जननी बहुदूरतः शिशुरहं स्तनपानकृतौ कृती ।
परिहरन्निह तामतिकोमलां तव कृते विहरामि हरे रहः ॥२५॥
विचरितं निखिलं गहनं मया गिरिगुहापि विलक्षणमीक्षिता ।
नहि कुतोऽपि तवोपगतं पदं क नु विराजसि माधव निर्जने ? ॥२६॥
वदति मे जननी करुणामयस्त्वमिति नैव मृषा तदिदं भवेत् ।
जगदधीश्वर दर्शय पावनं वपुरधीनजनस्य दृशोर्द्वयीम् ॥२७॥
विकलतामुपयामि पिपासया दहनवत् क्षुधयास्मि निपीडितः ।
पथि परिभ्रमणादलसं पदं गमनशक्तिविहीनमजायत ॥२८॥
तव पदं स्मरतः कति वासरा विलयमापुरपीतपयोलवाः ।
यदि न ते चरणाम्बुजदर्शनं तदिह मृत्युपथं परिलोकये ॥२९॥
इति चिरं करुणस्तुतिभाषितैरवनिपालसुतः स्थिरमानसः ।
सपदि मामुपमन्त्र्य वनान्तरे विगतचेतन एव धरामगात् ॥३०॥

अथ मदीयनिदेशवशं गतस्त्वमुपगम्य तदेव वनान्तरम् ।
ध्रुवमचेतनमुत्सुकचेतसा स्फुरितचेतनकं समदीक्षयः ॥३१॥
तदनु दीक्षितमक्षतलक्षणं नियतमन्त्रजपव्यवसायिनम् ।
नवनिकेतनमस्य कृते कृतम् समनयं चिरदर्शनहेतवे ॥३२॥
कियदथापरमाचरितं त्वया मम सहायतया विहितं हितम् ।
तदधुना पुनरस्ति तथा विधि-र्विधिकृतस्य यतो जगतो हितम् ॥३३॥
सुरमुनिः पतगाधिपलक्ष्मणः समवकर्ण्य शुचिस्मितभाषितम् ।
विहितवान करयोर्विनयाञ्जलिं कथितवानथ भक्तिकृतक्षणः ॥३४॥
असुमतामसुधारणकर्म यत् तदपि ते करुणां न विना भवेत् ।
तदिह यन्मयि मुञ्चसि कर्तृतां कथमियं न विमोहनचातुरी ॥३५॥
जगदधीश्वर तावकमायया जनिमतां त्वयि सर्वजगद्भ्रमः ।
तत इयं व्यवहारदशान्वये करणकारणकर्मभिदास्थितिः ॥३६॥
क्षितिमपो दहनं पवनं नभो रचितवानसि वैष्णवमायया ।
त्वदपरं सकलं हि विनश्वरं त्वमसि शाश्वतशान्तिमयः स्थिरः ॥३७॥
खगगणो गगने चिरमुत्पतन पतति नैव शरीरभरादधः ।
तदिह ते सकलस्थितिसाधनी विजयते कृतिरागमसाधिता ॥३८॥
त्वदनुशासनया कमलासनो व्यधित वर्णचतुष्टयमात्मनः ।
तदुदिता खलु धर्मपरम्परा प्रथयते जगतः स्थिरसत्त्वताम् ॥३९॥
भवति तिष्ठति नश्यति यज्जगत् सकलमेव भवत्प्रभुताफलम् ।
मयि यदेव विलोकयसे कृतिं नहि विना तव शक्तिमभूदियम् ॥४०॥
मम विकत्थनया किमिहानया दयितबुद्धिरियं तव दीप्यते ।
कथमितो निजशक्तिमनुन्नयन मयि महत्त्वमतिं तनुषेऽन्यथा ॥४१॥
किमपराद्धमहो पदसेविना चरणयोरनयः प्रकृतोऽथवा ।
यदपराधविशुद्धिकृते नते दुरितदानमिदं क्रियते त्वया ॥४२॥
यदि चिरात्तव दीनजने दया यदि तपो मम रूढमभूत् पुरा ।
यदि पदाब्जयुगं तव चिन्तितम् यदि च नामपदस्मरणान्महः ॥४३॥

यदि रमासहितस्य तवानघं वपुरसाध्यसुसाधनकारणम् ।
परमभक्तिभृता मयकेक्षितं तदिह कृत्यविधौ विनियुङ्क्ष्व माम् ॥४४॥
अथ भवस्थितिसंहृतिशक्तिमान् मृदुगिरा समुवाच जनार्दनः ।
सुरमुनिः प्रियशिष्यसमोऽन्तिके विनयवान् निषसाद कृताञ्जलिः ॥४५॥
सुरमुने स्मृतिकारणमात्मनः शृणु मनो विनियम्य विशेषतः ।
प्रभवति स्म कलिः पृथिवीतले सपदि पापकला प्रथनं गता ॥४६॥
नहि विराजति पुण्यपरम्परा कलुषराशिरुदित्वरतां ययौ ।
पुनरथो जगतः स्थितिसाधनं सुकृतमुद्गमयस्व पुरातनम् ॥४७॥
व्रज धरामनुरागपदं मम प्रथय सत्यसमर्चनमूर्छनाम् ।
भवतु येन भुवः कलुषात्ययः सुकृतसारसमागमसाधिमा ॥४८॥
तव विना कृतिमान्तरिकीं परां न खलु कोऽपि विधातुमिदं क्षमः ।
न हि हुताशमृते दहनं भवेन्न तिमिरं तपनादि विना क्षतम् ॥४९॥
प्रसर काञ्चनपत्तनमात्मना धरणिविश्रुतमुच्छ्रितनागरम् ।
प्रथमतः किल तत्र पुरान्तरे प्रथय सत्यसनातनपूजनम् ॥५०॥
प्रतिगृहं मम पूजनसम्भवं शुभफलं परिदर्श्य परीक्षया ।
जनय सर्वजनेषु रतिं दृढां न हि फलं लभते विधिना विना ॥५१॥
जगदिदं निजकृत्यनुसारतः शुभमथाशुभमेति यदृच्छया ।
परममुष्य विशुद्धकृतिक्रमे व्रजति सज्जन एव निमित्तताम् ॥५२॥
अलमथ क्षणमात्रमपेक्षया लघु लघूकुरु भारवतीं भुवम् ।
कलुषभारवशादियमद्य भूः पतति दारुणदुःखपयोनिधौ ॥५३॥
चरति भारतवक्षसि सन्ततं करुणरोदनमन्तरदारणम् ।
शमय सोमकरैरिव तापितं सदुपदेशकथामृतधारया ॥५४॥
अचलभक्तिगृहीतजनार्दनाः कलुषमार्गविमोचनया जनाः ।
शुभपथे रचयन्तु गतिं निजां वहतु देवपुरीव धरोन्नतिम् ॥५५॥
भुवनसृष्टिकृते पितुरन्वहं बत फलोज्झितमद्य परिश्रमम् ।
सफलयस्व विकारपराजयै-रलमलं समयक्षपणेन ते ॥५६॥

व्रज शिवास्तव सन्तु पथिक्रमा भवतु भारतभूतलमङ्गलम् ।
पुनरधःक्रमणाकुलजन्तवः परिभवन्त्वशिवग्रहदूषणम् ॥५७॥
सुरमुनिः सुरनाथकथामथ प्रथितभक्तिरुपेत्य कृतार्थवत् ।
चरणपङ्कजयोरनमत्तदा घनजटातटदीव्यदुपान्तयोः ॥५८॥
तव निदेशवचो मयि बालिशे यदिदमुत्तमभाग्यफलं हि तत् ।
अथ यथामति साधयितुं यते प्रणतिकोटिरियं तव पादयोः ॥५९॥
अथैवमाधाय जनार्दनेरितं वचो महाभागवतो हि नारदः ।
मदेन वीणां महतीं निनादयन्नभिप्रतस्थे पुरमेष काञ्चनम् ॥६०॥

इति श्रीकालीपदतर्काचार्यकृते सत्यानुभावमहाकाव्ये
नारदप्रेरणं नाम चतुर्थसर्गः ॥

## पञ्चमसर्गः

चेतसा हरिकथामथ स्मरन्नम्बरं समवलम्ब्य नारदः ।
सिद्धचारणगणैरुपस्तुतो नैव सोढुमशकद् विलम्बितम् ॥१॥
पूज्य-पूजकगतिव्यतिक्रमात् प्रत्यवायपरिभूतिशङ्कया ।
जानतामपि मुनीश्वरत्वरां नैव ते विरतिमापुरर्चनात् ॥२॥
व्योमचारिसुरसङ्घसत्क्रियां सत्वरं समधिकृत्य नारदः ।
प्लावयन् स्वरसुधाभिरम्बरं स्वःपदादवततार भूतले ॥३॥
काञ्चनाख्यमथ चारु पत्तनं सर्वपौरगुणरत्नभास्वरम् ।
देवलोकमिव भूतलेऽपरम् प्राप्तवान् क्रमश एव नारदः ॥४॥
यत्र चित्रतमपत्रचित्रिता सौधभित्तिरतिमात्रमञ्जुला ।
नागरस्थितिशुभोपयोगितामाससाद सुतरां प्रतिक्षणम् ॥५॥
लक्षचित्रवलयोपलक्षिता रागिणां भवनभित्तयो मुहुः ।
एकतो निखिलसंसृतिश्रियाम् ईक्षणार्थमिव कारुभिः कृताः ॥६॥
लोचनोपमगवाक्षशालिनी मालिनी विविधरत्नमालया ।
हर्म्यराजिरधिपत्तनं ततः कौतुकं परिददर्श विस्मिता ॥७॥

# Sanskrit Sahitya Parishat

## Appeal

This Parishat was started by a few poor and humble pandits in the northern part of Calcutta in 1916. Gradually after 24 years the number of its members has increased to about 1000. The annual income of the Parishat, to begin with, was about Rs. 100/- only, it is now about Rs. 4000/-. The peculiar features of this Parishat are that it is unique of its kind in this way, that it is probably the only society for the cultivation of Sanskrit language and literature in the way as described below: —

First of all, there is a Chatushpathi in which there is a number of students who receive instructions in the various branches of Sanskrit learning from several learned pandits.

A monthly journal is published by the society, and articles in prose and poetry are written entirely in the Sanskrit language.

Periodical meetings are held in which original papers are read and discussed in Sanskrit. All the proceedings of the society are carried on in the Sanskrit language. The Society has, amongst ts active members, a number of pandits who give expositions of he various Śāstras at different times.

The Parishat has a library and Reading room. The number of printed books in the library is about 6000 and the number of manuscripts is about 3300. It will be seen that the number bears a very favourable comparison to similar figures in other libraries of the kind. Probably the collection is about the largest of its kind. There is a large number of manuscripts waiting to be deciphered and published. Collection of original manuscripts is one of the activities in which the Parishat has been particularly successful.

Sanskrit dramas, etc., are layed on the stage by members of the Parishat periodically and publicly in such places as the Calcutta University Institute, etc., and before illustrious ersonages.

As the activities of the Parishat are many-sided its wants are also on the increase. It is greatly handicapped by the fact that it suffers from want of accommodation. It is at present situated in a number of rooms which are inadequate to the purpose of the society. For want of room the library, which is expanding, is suffering. Many valuable manuscripts are not getting the attention that they deserve. The Corporation of Calcutta has recently made gift of a plot of land to the Parishat. Some gentlemen very generously